❀ श्रीश्रीगौरहरिर्जयति ❀

प्रकाशितग्रन्थसंख्या—१४४

सानुवादं

# श्रीकृष्णकौतुकम्

रचयिता—

श्रीश्रीपरमानन्दपादमहोदयः

:१

सम्वत्—२०२५

मूल्य—१) रुपया

प्रकाशक—

कृष्णदासबाबा

कवरपृष्ठ मुद्रक—श्रीप्रिन्टिंगप्रेस, मथुरा।

# ❀ श्रीकृष्णकौतुकम् ❀

श्रीकृष्णो मनो मोहनो जयति—

श्रीनन्दनन्दनं बन्दे वृन्दाबनविहारिणम् ।
राधिकावदनाम्भोजप्रलुब्धोन्मत्तषट्पदम् ॥ १ ॥
तप्तकाञ्चनगौराङ्गं प्रसन्नवदनाम्बुजम् ।
श्रीकृष्णाख्यं गुरुं नित्यं नमामि शिरसा मुदा ॥ २
कृष्णलीलाञ्चितं चित्रं प्रबन्धं कृष्णकौतुकम् ।
श्रुत्वा नन्दन्तु कृष्णज्ञाः परमानन्दवर्णितम् ॥ ३ ॥
श्रीकृष्णकृपया स्त्वेतत्प्रकटीभूतमद्भुतम् ।
अन्यथा नितरां गुह्यं शक्तो वक्तुं कथं जनः ॥ ४ ॥

तद् यथा—एकदा नन्दिनी नाम्नी काचिद् गोकुलवासिनी ।
वनदेवीं मुदा वृन्दां पप्रच्छ प्रेम निर्भरा ॥५॥

नन्दिना—अयि देवि सदा वृन्दारण्ये त्वं हरिणा समम् ।
चरस्यद्भुतलीलाभिर्जानास्येतस्य विभ्रमान् ॥६॥
यानि कानि रहस्यानि राधामाधवयोर्वने ।
भवने वा समग्राणि कृपया त्वं वदस्व माम् ॥७॥
यत्तयोर्नवलीलाभिर्वशीभूतो ममाशयः ।
इदं गुह्यं परं ज्ञातं विचरामि वने ब्रजे ॥८॥
ब्रजे वाथ कथं देवि ! कृष्णः कमललोचनः ।
लाल्यते पाल्यते प्रेम्णा रोहिण्या नन्दभूपतेः ॥९॥
वसामि सततं गोष्ठे तयोर्माधुर्य्यमोहिता ।
विलोकनविनोदेन लीला ज्ञातुं न शक्यते ॥१०॥

वृन्दा—अयि नन्दिनि ! रागाढ्ये तयोः सौन्दर्य्यमोहिते ।
राधामाधवयोर्लीलां धन्यासि यदि पृच्छसि ॥११॥

तयोः केलितरङ्गिण्यां मनो मे मीनवन्सदा ।
अवमज्जति कल्याणि ! तत् त्वां प्रकथयाम्यहम् ॥१२॥
चतुष्कोणं गृहं रम्यमस्ति नन्दस्य नन्दिनि ।
तद्द्वारे वरगोशाला विशालाः कथयामि ते ॥१३॥

तद्यथार्थं सविस्तारं शृणु मत्तः शुभाशये ।
वर्णनं तस्य गेहस्य चेष्टितं च हरेस्ततः ॥१४॥
या पूर्वाभिमुखी रम्या स्तम्भशाला सुशोभना ।
सप्त द्वारवती दीर्घा चतुः कोष्ठैरलंकृता ॥१५॥

संयुक्ता रत्नरचनैश्चामीकरकरम्बिता ।
मुक्तादामविलम्बाभिर्वलभीभिर्विराजिता ॥१६॥
तत्र नन्दो वसन्नित्यं परमानन्दनिर्वृतः ।
पुत्रस्नेहयुतस्वान्तस्तद्दर्शनमहोत्सवः ॥१७॥

उत्तराभिमुखी चान्या स्तम्भशाला मनोरमा ।
सापि दिव्यमहारत्नै मण्डिता तत्समा सखि ॥१८॥
तत्र चारोपिताः कीला दधिनिर्मन्थनाय वै ।
अन्यापि वहुधा शुद्धा रचिता तद्गृहान्तरे ॥१९॥

दधिनिर्मन्थघोषेण घोषिता प्रातरेव च ।
यशोदापि महाभागा नित्यं तिष्ठति तत्र हि ॥२०॥
दक्षिणाभिमुखी मुख्या रम्या रसवती सदा ।
यत्र भक्ष्यं च भोज्यं च षट् रसं परिपच्यते ॥२१॥

पश्चिमाभिमुखी दिव्या स्तम्भशाला वृहत्तरा ।
अन्नं च रसभाण्डानि रक्षितान्यप्यनांसि च ॥२२॥
अट्टालिकाः शुभाट्टालाश्चतुर्द्वारैः समन्विताः ।
बहु चित्र विचित्रैश्च चित्रिताश्च समन्ततः ॥२३॥

अलिन्दोऽपि महारम्यो विस्तीर्णश्च सुखावहः ।
यत्र कृष्णप्रिया वत्सा रणद्घंटाश्चरन्ति हि ॥२४॥



यत्प्राच्याः संमुखं द्वारं तस्य गेहस्य नन्दिनि ।
बृहत्कपाटसंयुक्तं तोरणैः समलंकृतम् ॥२५॥
यस्मिन् गृहे वसन्नंदस्तस्योपरि शुभाशये ।
अट्टालः स्फटिको रम्यः स्वर्णरत्नैरलंकृतः ॥२६॥
तस्मिन्नट्टालके रम्ये शेते वै नन्दनन्दनः ।
वितानस्तत्र रुचिरो विराजति वरानने ! ॥२७॥
स्वर्णरञ्जितसत्क्षौमैर्निर्म्मिता वहुयुक्तिभिः ।
मुक्तास्तबकदामानि लुण्ठन्ति परितः प्रिये ॥२८॥
वहु चित्रयुता भित्तिः स्वर्णरागेण रञ्जिता ।
वहुशो रोपितं तत्र सुगन्धभरभाजनम् ॥२९॥
तस्य भूमौ दुकूलानि विस्तृतान्यपि सन्ति वै ।
पर्य्यङ्कोऽपि स्वर्णरत्नैरचितो विस्तृतस्ततः ॥३०॥
तस्योपरि महाभागे ! दुग्धफेनसमोज्वला ।
शय्या च विस्तृता मृद्वी कृष्णचन्द्रसुखावहा ॥३१॥
गृहद्वारे सुविस्तारे परितो धेनुशालिकाः ।
राजद्वाराद्बृहत्याग्रे ततश्च वनराजयः ॥३२॥

नन्दिनी—
व्रजेन्द्रभवनस्यालं वर्णनं चाद्भुतं मया ।
त्वदनुग्रहवाक्येन श्रुतं देवि परं मुदा ॥३३॥
वर्णयाथ कृपापूर्णे श्रीकृष्णस्य विचेष्टितम् ।
प्रातरुत्थाय सततं किं करोति यथेच्छया ॥३४॥

वृन्दा—कदाचिद्बालरूपेण कृष्णस्त्रैलोक्यमोहनः ।
आक्रीडन् नन्दभवने मात्रा वै लालिते भृशम् ॥३५॥
आगता कापि वनिता दीनवद् विनयान्विता ।
मूकातिजडवच्चेष्टा कृष्णान्वेषणतत्परा ॥३६॥
तत्र क्रीडन्तमावीक्ष्य कृष्णं मित्रैः समावृतम् ।
परमानन्दमापन्ना तदा तूष्णीं स्थिताऽभवत् ॥३७॥

तां विलोक्य कृपापूर्णा यशोदा नन्दगेहिनी ।
अवोचन्मधुरं किञ्चित् का त्वं दीनेव संस्थिता ॥३८॥
क्व वासस्ते च कस्यासि किं नामा किं च ते कुलम्
किमाकांक्षसि कल्याणि तत्त्वं सर्वं वदस्व माम् ॥३९॥

वृन्दा—इति राज्ञीवचः श्रुत्वा सा च कृष्णपरा वधूः ।
सप्रश्रयमिदं भद्रे तामाह निजहृद्गतम् ॥४०॥

रागिणी—अहं देवि ! भवद्गोष्ठे विचरामि यथेच्छया ।
नित्यानन्दघनो यत्र रागिणी नाम नामतः ॥४१॥
नो जानामि स्वकं वंशं कुतो वाहं समागता ।
भवद्गेहे तु वाञ्छामि दासीभावं सदा हृदि ॥४२॥

वृन्दा—तया संप्रार्थिता चैवं यशोदा करुणाकुला ।
प्रत्यबोचत्तदा तत्वं यथा तस्या हृदि स्थितम् ॥४३॥

यशोदा-अयि रागिणि नित्यं त्वं वासं मम गृहे कुरु ।
सान्द्रानन्दसुखं यत्र विचरस्व यथा रुचि ॥४४॥
तथापि कृष्णरक्षार्थं भवती संगवर्त्तिनी ।
त्वं च साध्वी सुशीला वै मदाज्ञाप्ता सदा भव॥४५॥

वृन्दा—एवं यशोदयाज्ञप्ता रागिणी कृष्णसंगिणी ।
अभवत्सततं भद्रे परिचर्य्या विचक्षणा ॥४६॥
कृष्णोऽपि तोषितः साधुसेवया त्वनया शुभे ।
तस्यां प्रीतिं बहन्नित्यं सा च प्रेमभराकुला ॥४७॥

नंदिनी-भगवत्यद्भुतं साक्षाद्रागिणी भाग्यगौरवम् ।
या च नन्दगृहेश्वर्य्याज्ञप्ता कृष्णे वहद्रतिम् ॥४८॥
एतत्प्रसंगश्रवणान्मनो मे कुतुकान्वितम् ।
अभवन्नित्यमुदितां यत्पश्यामि व्रजान्तरे ॥४९॥
तथापि तत्प्रसंगं वै नो जानामि कथंचन ।
साम्प्रतं त्वन्मुखाम्भोजाच्छ्रुतं परमदुर्ल्लभम् ॥५०॥



अन्यं च श्रोतुमिच्छामि प्रसंगं जगदुत्तरम् ।
राधिकाकृष्णयोर्देवि ! कथं प्रेमाङ्कुरो भवत् ॥५१॥
कया दूत्या जलेनैव पालिता प्रेमवल्लरी ।
परिपक्वं कथं जातं तस्याः फलमपूर्वकम् ॥५२॥

यथा नन्दो व्रजपतिर्वृषभानुश्च तद्विधः ।
तस्य पुत्री प्रलोभ्यांगी राधाख्या जगदुत्तरा ॥५३॥
महसा सापि दुर्दर्शा पित्रा यत्नेन पालिता ।
आश्चर्य्यं मे परं देवि ! तस्याः कृष्णे च साहसम् ॥५४॥
राधिकाकृष्णयोर्योगं परमानन्दवर्द्धनम् ।
वक्तुमर्हसि मां देवि ! कुतुकान्वितचेतसम् ॥५५॥

वृन्दा—धन्यास्यतीवधन्यासि नन्दिन्या लोकनन्दिनि ! ।
यन्मां स्मारयसि प्रेम्णा लीलां पीयूषनिर्भराम् ॥५६॥
शृणु सर्वं च बृत्तान्तं यथाभूतं कुतूहलम् ।
वर्णयाम्यथ संक्षेपात्प्रसंगं लोकदुर्ल्लभम् ॥५७॥
कृष्णसौन्दर्य्यमाधुर्य्यमाख्यातं व्रजमण्डले ।

तदेव दूत्यकार्य्येषु निपुणं च निरर्गलम् ॥५८॥
सा च लोकोत्तरा राधा वृषभानोः गृहे सखि ।
जाता तत्सौष्ठवं तादृक् प्रसिद्धं व्रजवासिषु ।५८।
तदुक्तः सखि निर्वाधो रागो लोकत्तरे खलु ।
लोकोत्तराणां भवति नान्यत्राथ कदाचन ॥६०॥

न हि तत्र मादृशानामुद्यमेन प्रियो जनम् ।
तथापि स्वसुखार्थाय क्रियते यत्नसाधनम् ॥६१॥
एवं विधं मया दृष्टं सौष्ठवं नितरां तदा ।
उभयोरतुलं भद्रे ! संयोगाय विचारितम् ॥६२॥

दूत्यभावविशेषज्ञा कृष्णकौशलकोविदा ।
प्रेषिता सा मया वीरा राधायाः प्रेमवृद्धये ॥६३॥

एवं मयापि विपिने राधाया रूपकौशलम् ।
वर्णितं च प्रसङ्गेन कृष्णं प्रति शुभाशये ॥६४॥

नन्दिनी-बने गोचारणार्थाय यथा गच्छति माधवः ।
बयस्यैः सह सर्वज्ञै स्तत्र किं कुरुते हि सः ॥६५॥

बृन्दा— या बर्णिता मया पूर्वं रागिणी प्रेमनिर्भरा ।
कृष्णसेबनहेतौ सा व्रजराज्ञ्या निरूपिता ॥६६॥
सदा बिभातसमये सोल्लासं व्रजपात्मजम् ।
प्रवोधयति सा प्रेम्णा रागिणी प्रेमनिर्भरा ॥६७॥

रागिणी-चन्द्रानन बिभातोऽयं जातः कमललोचन ।
निन्द्रां जहीहि यन्माता समाह्वयति बत्सला ॥६८॥
चूर्ण्यं घृतेन संमर्द्य निर्मिता मृदुरोटिका ।
संभेद्य नवनीतेन पूरिता शर्करायुता ॥६९॥
पटबद्धं दधि प्रेम्णा मात्रा यत्नेन रक्षितम् ।
उत्तिष्ठ नयनानन्द यथेच्छं कुरु भोजनम् ॥७०॥
सुबलाद्या वयस्यास्ते सर्वे तत्रैव संस्थिताः ।
अतिप्रेमभराक्रान्तास्त्वद्वक्त्राम्बुजदर्शने ॥७१॥
बने गन्तुं च रन्तुं च सर्वे ते कौतुकान्विताः ।
कोलाहलं प्रकुर्व्वन्ति व्रजराज्ञ्याः पुरः स्थिताः ॥७२॥

बृन्दा—एवं संप्रार्थितः कृष्णो रागिण्या मृदुजल्पनैः ।
उत्थितः शनकै र्मन्दमगमदवलम्ब्य ताम् ॥७३॥
सालस्यगतिरुद्याने जृम्भमाणमुखाम्बुजः ।
यशोदापार्श्वमगमदुन्निद्र कमलेक्षणः ॥७४॥
तदा सप्रेमबचनैर्लाल्यमाना यशोदया ।
गोविन्दः स्ववयस्यैश्च करोति रुचि भोजनम् ॥७५॥
ततो रक्तदुकूलेन निर्मितं बरमौक्तिकैः ।
मण्डितं परितः कृष्णः शिरोभूषणमादधत् ॥७६॥



सुस्निग्धघनकेशाश्च वेष्टितास्तत्सुवेष्टनैः ।
ललाटोपर्य्यधुः शोभां मधुपालीव पङ्कजे ॥७७॥
चलच्चिल्लिलताभिश्च मोहयन् वै मनोभवम् ।
नेत्रभंगिवलाभिज्ञो माधुर्य्यमधुराननः ॥७८॥
सम्यगुन्नतनासो हि कैशोरोदयसुद्युतिः ।
विम्बाधरातिरुचिरो रदराजिविराजितः ॥७९॥
कर्णयोः कर्णिकापुष्पैः स्वर्णरत्नैरलंकृतः ।
तत् त्विषा नितरां श्रीमद् गण्डमण्डलमण्डितः ॥८०॥
कम्बुवत्सुष्ठुकण्ठे स स्वर्णमालामथो दधद् ।
कौस्तुभेन च संक्लृप्तमुक्तादामानि बक्षसि ॥८१॥
लसत्प्रलम्बदोर्युग्मे रत्नाङ्गदमनोहरः ।
अङ्गुल्यां मुद्रिकां दिव्यां प्रदधद्रत्नरञ्जिताम् ॥८२॥
कटिवस्त्रं दधद्दिव्यं रक्तोत्पलसमप्रभम् ।
किङ्किणीदामसंनद्धकूजच्चरणनूपुरः ॥८३॥
उत्तरीयं तथा दिव्यमुद्यद्दिनकरप्रभम् ।
धत्ते करे च रुचिरां वंशीं बिश्वस्य मोहिनीम् ॥८४॥
एवं संभूषितः कृष्णः प्रत्यङ्गै र्नन्दसद्मतः ।
ब्रजत्यद्भुतलीलाभिश्चारणाय गबां बने ॥८५॥
कृष्णं यशोदानन्दौ च क्षणं त्यक्तुं न शक्नुतः ।
प्रकष्टेन परावृत्तौ बीक्षमाणौ च तन्मुखम् ॥८६॥
प्रियनर्म्मबयस्यैश्च संपरीतोऽभितस्ततः ।
दीप्यमानः स्वबपुषा स्मयमानमुखाम्बुजः ॥८७॥
अथ गोप्यो गृहात्तूर्णं प्राप्ताः सर्वाः प्रलोलिताः ।
कोलाहलं समाकर्ण्य कृष्णो गच्छति वै बने ॥८८॥
काश्चिदट्टालमारुह्य बीक्ष्यमाणाश्च तन्मुखम् ।
दूरात्कटाक्षविक्षेपै र्मिलन्त्यो मुदमाययुः ॥८९॥

समागताश्च यास्तत्र यत्र मित्रैर्वृतो हरिः ।
पश्यन्त्यस्तन्मुखं प्रेम्णा स्थिताश्चित्रकृता इव ॥९०॥
कैशोरेण बिभिन्नाङ्गो गोपीगणमनोहरः ।
नैचकीश्च पुरस्कृत्य गच्छत्येवं बनं हरिः ॥९१॥
शृंगबंशनिनादेन पूर्य्यमाणो दिगन्तरे ।
परस्परं हमन्तो बै बनोपान्ते समागमन् ॥९२॥

ब्रजेन्द्रनन्दनः श्रीमद्बृन्दावने सुशोभने ।
गोभिर्गोपैश्च सहितः प्राविशन्केलितत्परः ॥९३॥
तस्मिन् वृन्दाबने रम्ये द्रुमाः सर्वार्थसिद्धिदाः ।
फलपुष्पदलाकीर्णा श्चाल्यमाना बिहङ्गमैः ॥९४॥

अश्वत्थाः प्रचलत्पर्णाः स्निग्धाः कान्तिभराङ्किताः ।
शुकैश्च सारिकाभिश्च संकुलाः शब्दपूरिताः ॥९५॥
बटाः सान्द्रदलाकीर्णाः स्कन्धशाखाभिराबृताः ।
रत्नोपमपरिपाकाः कीशबालकुलकुलाः ॥९६॥
तालास्तमालाः शालाश्चाप्याम्रजम्बुकदम्बकाः ।
कपित्था बिल्बवकुलाः खर्ज्जूराश्च यतस्ततः ॥९७॥

चिंचिणी नालिकेरश्च मधूकप्लक्षपीलुकाः ।
पूगाः पलाशा वंशा श्चाप्यन्यैरन्योद्भवा द्रुमाः ॥९८॥
क्वचित्कल्पान्हिपास्तत्र क्वचिन्सच्चंदनद्रुमाः ।
चम्पकाशोकपुन्नागा नागा श्चाप्यथ पाटलाः ॥९९॥
दाड़िमीनिम्बवहुशो जंभीरा बीजपूरकाः ।
सदा फलधराश्चान्ये बृक्षा मिश्रफलान्विताः ॥१००॥

द्राक्षाणां बल्लरी तत्र मालती जाती यूथिका ।
मल्ली वासन्तिका कुंदी स्वर्णयूथी च केतकी ॥१०१॥
रङ्गणः कर्णिकारश्च बिचिकिल्लजपादयः ।
वर्त्तन्ते पुष्पिता वृक्षा सुखदा मधुवन्सदा ॥१०२॥



तत्र कुंजगृहा रम्याः पुष्पै र्मण्डितशेखराः ।
मधुमत्तरसासक्तगुञ्जद्भृंगकदम्बकाः ॥१०३॥
कोकिलाः शिखिनस्तत्र कूजन्नृत्यमुदान्विताः ।
सपत्नीका मृगा नित्यं चरन्तः कृष्णमोदिताः ॥४॥
यमुना यत्र सुबहा पुण्यनीरातिनिर्म्मला ।
पुष्पिता वनराजीभिः सुरभीकृतसत्तटा ॥५॥
कल्हारकुमुदामोदैः संमिलच्चंदनद्रुमैः ।
चलो वायुः सुखस्पर्शो यत्र नित्यं शुभाशये ॥६॥
कोकाः कारण्डवा भद्रे ! हंसाश्चान्ये जलप्रिया ।
बसन्ति सुखिनस्तत्र कृष्णसौन्दर्य्यमोहिताः ॥७॥
एवं भूते बने रम्ये धेनुचारणतत्परः ।
प्रविशंस्तत्र सुवलं प्राह कृष्णः सकौतुकम् ॥८॥
कृष्ण—पश्य पश्य वयस्येदं वनं परमशोभितम् ।
यत्पुष्पैश्च फलैः पर्णैरानन्दो मे विवर्द्धते ॥९॥
क्वचित्फलपरिपाका मधुसीधुमदापहाः ।
कूजद्भिः कोकिलालिभी रसाला मदयन्ति माम् ॥१०॥
दाडिमी बिकसद्वक्त्रा रत्नवद्दर्शनच्छटा ।
प्रलोभयति कोरालिं किमन्यद्वर्णयामि ते ॥११॥
सदा फलधरं पश्य त्विषा निन्दति हाटकम् ।
केबलं व्रजनारीणां वक्षोजगुणतस्करम् ॥१२॥
पुष्पिताग्राश्च बल्लर्य्यो वहन्त्यः सीधुसञ्चयम् ।
बन्दीभावं प्रकुर्वन्ति यासां मधुपमण्डलाः ॥१३॥
य एतस्मिन्महारण्ये प्रीतिं कुर्वन्ति जन्तवः ।
न तेषां प्रीतिरन्यत्र भवत्यपि कदाचन ॥१४॥
सुबलः—
सत्यं भवान्यदेतस्मिन्नितरां रतिमावहेत् ।
त्यक्त्वा नन्दस्य भवनं वसत्यनुदिनं सदा ॥१५॥

ऐते द्रुमाश्च वल्लर्यो भवदम्भोजपाणिना ।
स्पृष्टा नवांकुरव्याजात्पुलकान्येव बिभ्रति ॥१६॥

मृगपत्न्यश्च नितरां तव वक्त्रेन्दुमण्डलम् ।
विलोकयन्ति सप्रेम्णा सदानिमिषलोचना: ॥१७॥

पक्षिणश्चातिसंतुष्टा भवदागमनप्रिया: ।
सत्कारं ते प्रकुर्वन्तो गृहस्था इव जल्पनैः ॥१८॥

तस्मात्सत्यमिदं प्रेष्ठ यस्त्वां च रन्तु इच्छति ।
त्यक्त्वा बृन्दाबनं तेन कुत: संप्राप्यते भवान् ॥१६॥

तत्स्वकां वंशिकां कृष्ण निवेश्याधरपल्लवे ।
संविनोदय सर्वज्ञ तद्रावेण वनौकस: ॥२०॥

वृन्दा—सुबलालापमाकर्ण्य स्वकीयानां सुखप्रद: ।
काकलीं मुरलीं कृष्ण: प्रावादयत मोहिनीम् ॥२१॥

तद्ध्वनिं सहसाकर्ण्य सर्वे मोहं समापिता: ।
स्वस्वभावान्परित्यज्य वैपरीत्यं गतास्तदा ॥२२॥

नद्यो वेगेन रहिता गिरयो निर्झरज्जला: ।
मधुस्पन्दन्ति तरव: खगा: संमीलितेक्षणा: ॥२३॥

सपत्नीका मृगा जाता श्चित्रवत्स्तुभिताशया: ।
शाखामृगाश्च शाखायां प्राप्ता: मोहं तथाबिधम् ॥२४॥

किं वर्णयामि धेनूनां कृष्णे स्नेहं महाद्भुतम् ।
कर्णपत्रैः पिवन्तीनां वंशीनादं मुहुर्मुहु: ॥२५॥

दन्तदष्टतृणा दुग्धं स्रवन्त्यश्च मुहुर्मुहु: ।
हुंकारमेव कुर्वाणास्तत्रैव व्रजधेनव: ॥२६॥

तदा रामं पुरस्कृत्य सह गोपालदारकैः ।
व्यचरद्विपिने कृष्णो धेनु: संयोज्य शाद्वले ॥२७॥

भृंगैरनु सुगायंत: कूजत: कोकिलैरनु ।
वर्हिभि: सह नृत्यन्तो धावन्तोऽनु भृंगै: परे ॥२८॥



केचिद्द्रुमेषु संरुह्य जल्पन्त: सुकपोतवत् ।
कोपयन्त: कपीन्स्तद्वत्ताडयन्तश्च तत्फलैः ॥२६॥

केचित्कस्यापि हस्तं वा स्पृष्ट्वा धावन्त अग्रत: ।
ते चताननुधावन्त: प्रगृह्य सुखमासते ॥३०॥

संनिगृह्य फलं चान्ये परस्परं मुदान्विता: ।
लीलाखेलं प्रकुर्वन्त: कृष्णारोपितमानसा: ॥३१॥

एवं परस्परं हृष्टा: क्रीडयन्त: सकेलिभि: ।
यमुनोपकदम्बे ते संगता: कुतुकान्विता: ॥३२॥

यत्र गोपकुमारीणामहरद्वसनं हरि: ।
तस्य शाखां समारुह्य क्षोभयंस्तन्मनांसि वै ॥३३॥

छायाभि: सघन: शीत: सुखद: सर्वदेहिनाम् ।
यमुनावायुना स्पृष्ट: कमनीय: समन्तत: ॥३४॥

तत्रोपबिष्ट: श्रीकृष्णो बलदेवेन संयुत: ।
सखिभि: केलिनिपुणै वृतो राजत नन्दिनि ॥३५॥

सुवलश्चटुलश्चित्रो बिचित्रोऽथ सुलोचन: ।
सुदर्श: सुमुखो धूर्त्त: सखाय: कृष्णतत्परा: ॥३६॥

श्रीदामाथ सुबाहुश्च वलदेवानुबर्त्तिनो ।
अन्यांस्तु भगवत्प्रेष्ठान बर्णयापि यथाभिधम् ॥३७॥

अर्जुनो भद्रसेनश्च सुभद्रो भद्रदर्शन: ।
सुकीर्त्तिर्भद्रमूर्त्तिश्च कुमुद: कंजलोचन: ॥३८॥

सुकंठो बिकसद्वक्त्र: प्रचण्डो लोललोचन: ।
चतुर: कुण्डली मानी लोभक: कृष्णबल्लभ: ॥३९॥

बिशालश्च चलस्तोको नानाकेलिपरायण: ।
कृष्णप्रियं प्रकुर्वत: प्रेम्णा तस्यानुभाविता: ॥४०॥

राजलीलां समाश्रित्य पुष्पसिंहासने शुभे ।
आसीनस्तत्र गोविन्दोऽभिषिक्तो रामसंमत: ॥४१॥

पुरा गोबर्द्धनोद्धारे सुरभीकुलरक्षणात् ।
कामधेन्वाभिषिक्तोऽभूद्गोबिन्दो व्रजमण्डले ॥४२॥
चामराभ्यां पुष्पजाभ्यां बीजयन्तौ मुदान्बितौ ।
प्रेम्णा चित्रबिचित्रौ तौ तन्मुखार्पितलोचनौ ॥४३॥

सुमुखः छत्रं दधार सुमनोभिरलंकृतम ।
शुक्लबर्णं सुगन्धाढ्यं बिश्वेषामपि मोहनम् ॥४४॥
अमात्यभावं संप्राप्तः स्वच्छयाथ हलायुधः ।
श्रीकृष्णोऽपि तदुक्तेन व्यचरद्राजनीतिषु ॥४५॥

सुवलश्चटुलश्चैब हरेः पार्श्वानुवर्त्तिनौ ।
मोदयन्तौ सुबाणीभि र्यथा तस्मै प्ररोचते ॥४६॥

सुदर्शश्चैब धूर्त्ताख्यो जातौ द्वौ वेत्रधारिणौ ।
जयबाणीं वेदयन्तौ सर्वेषां प्रभयान्वितौ ॥४७॥
मधुमङ्गलोऽथ सर्वज्ञः सर्वशास्त्रार्थकोबिदः ।
अवदत्तत्समक्षं तु राजनीतिं मुहु र्मुहुः ॥४८॥

अन्ये च तत्र गोपालाः प्रश्रयानतकंधराः ।
मर्य्यादां स्वां समालम्ब्य स्थिताः सर्वे मुदान्विताः॥४९॥
किं बर्णयामि तच्छोभां यथाभूतं कुतूहलम् ।
प्रथमं पीठरचनां शृणु नन्दिनि ! तत्वतः ॥५०॥

नानापुष्पस्य सन्दोहै र्बहुवर्णै र्विकल्पिताः ।
बितानास्तत्र रुचिरा स्तवकोत्पललम्बिनः ॥५१॥
बिलसत्स्वर्णवर्णं हि फलं यस्मिन् शुभाशये ।
रम्भाया रुचिरस्तम्भाः शतपत्रैः समवृताः ॥५२॥

सिक्ताभूमिः सुनितरां तरणेदुर्हितुर्जलैः ।
सुदूर्वास्तरणास्तत्र हरिद्वर्णाः सुशोभिताः ॥५३॥
शिखिराजं व्रजपतिराश्वासयत कौतुकी ।
मेघगम्भीरया बाचा स्वकुलैः संबृतं तदा ॥८०॥



प्रजास्तत्र समायाता भर्तुर्दर्शनोत्सुकाः ।
यथायोग्यं स्वस्वबलीनर्पयन्तः पुरः स्थिता ॥५४॥
रक्तवक्त्रः कपिपतिर्वंशीबटनिवासकः ।
गृहीत्वा नालिकेरस्य फलं प्रभुमुपागतः ॥५५॥

चण्डवीर्य्योऽथ कपिराट् द्वादशादित्यचारकः ।
मधुरं फलमादाय स्वामिने संन्यवेदयत् ॥५६॥
अन्ये बै बानरास्तत्र संभाराकुलपाणयः ।
समागता नरपतेरग्रतो नतकन्धराः ॥५७॥
सपत्नी कुरंगालासा संप्राप्ता कौतुकान्बिता ।
तदंघ्री पूजयन्तीव निजनेत्रसरोरुहैः ॥५८॥

गोवर्द्धनाद्रेः शिखिनः संप्राप्तास्तज्जवान्विताः ।
निजनृत्यविनोदेन नन्दयन्तो बलानुजम् ॥५९॥
कीरास्तत्र तदा प्राप्तास्तत्कीर्त्तिममलां मुहुः ।
पठन्तः हर्षमापन्ना मुखमाधुर्यमोहिताः ॥६०॥

कोकिलानां गणास्तत्र तूष्णिमागत्य तद्वने ।
तद्यशः पुण्यमुच्चैश्च गायन् तन्मधुरस्वरम्॥६१॥
षट्पदा मंडलीं कृत्वा संप्राप्ताश्च तदन्दिके।
गायन्तः सुस्वरं मन्दं यथाभूतं ब्रजेश्वरम् ॥६२॥

चकोराः कृष्णवक्त्रेन्दुं बीक्षमाणा मुहुर्मुहुः ।
अपिवन्नेत्रचषकैस्तस्य माधुर्य्यमासवम् ॥६३॥
चंचुपुटाभ्यां निधायाथ सनालान्युत्पलानि वै ।
अर्पयन्ति स्म कृष्णाय मराला मुदिताशयाः ॥६४॥

एवं सर्वे स्वस्वबृत्या गोविन्दे बनबासिनः ।
अबहन्नतुलं प्रेम यद्ब्रह्मादैश्च दुर्ल्लभम् ॥६५॥
तान् सर्वांश्च सुबाणीभिर्यथायोग्यमधोक्षजः ।
आस्वाशयन्निदं प्राह कुतुकान्वितचेतसा ॥६६॥

कृष्ण —रक्तवक्त्र महाभाग चण्डवीर्य्य महाबल ।
स्वस्थानेषु च निर्वैरं वसन्ति भवदादयः ॥६७
वृन्दा—श्रीकृष्णस्य वचः श्रुत्वा प्रश्रयानतकन्धरौ ।
गदितः स्माञ्जलिं बध्वा द्वौ शाखामृगपुंगवौ ॥६८॥

प्रथमं च रक्तवक्त्र—
स्वामिन्वयं भवद्राजे तिष्ठाम सुखिनः सदा ।
तथाप्ययं चण्डवीर्य्यश्चण्डिमानं करोति हि ॥६९॥
चंडवीर्य्यः—न जीवं कश्चिदस्तीह त्वन्नाथस्त्वत्परायण ।
कस्यापि यश्चरेद्द्रोहं मनसापि कदाचन ॥७०
तथापि वानराणां वै स्वभावश्चपलो विभो ।
फलाशनानां भक्ष्यार्थे यदि कश्चिद्विपर्यय. ॥७१॥
तदेतन्मम चापल्यं मदीयानां च यः क्वचित् ।
एष एव वयस्यो हि तत्सर्वं कर्त्तुमर्हतु ॥७२॥
सुवक्त्रश्चास्य पुत्रो वै भीमवीर्य्योऽथ मत्सुतः ।
उभावेवहि सेवायां तिष्ठतां तव सन्निधौ ॥७३॥
क्वचित् कस्यापि भो नाथ हृदये द्रोहरूपिणी ।
ग्लानिर्न जायते यानुद्वयो रोषविवर्द्धिनो ॥७४॥
वृन्दा—एवं निजागः संमानो मन्यमानः स्वयं ततः ।
भीमवीर्य्यं सुवक्त्रं च चरणे पातन्हरेः ॥७५॥
कृष्णोऽपि तस्य सद्वृत्त्या तोषितः कंठतः स्वयंम् ।
मालामुत्तार्य्य ताभ्यामददात्कारुण्यसागरः ॥७६॥
कृष्ण—भवन्तौ गच्छतां देशान् स्वकान् मम निदेशतः ।
स्थातव्यं च सदा तत्र निर्विरोधे स्वजातिषु ॥७७॥
वृन्दा—एवमेतौ समाज्ञप्तौ हरिणा नृपरूपिणा ।
दण्डवत्प्रणिपत्याथ संगतौ निजमालयम् ॥७८॥
अथ कृष्णो मृगं क्वचित्समाहूयान्वशांतयत् ।
स चापि मञ्जुलं सूत्रं समर्प्य स्ववनं गतः ॥७९॥



चित्रकंठं स्वतनुजं निवेद्य हरये गिरिम् ।
संगतो ज्ञातिभिः साकं प्रणिपत्य मुहुर्मुहुः ॥८१॥
तदा कीरपतिं कृष्णोऽनन्दयन्मृदुजल्पनैः ।
रक्तकंठं स्वतनयं निवेद्य स गृहं गतः ॥८२॥

कलकण्ठीति विख्याता कोकिलानां वरीयसी ।
तामाहूयाथ गोविन्दः स पप्रच्छदनामयम् ॥८३॥
कृष्णः—कलकंठि क्व वासस्ते कथं तिस्ठसि नित्यशः ।
तत्सर्वं श्रोतुमिच्छामि कथयस्व यथाविधम् ॥८४॥
कलकंठी—माकन्दमण्डपे नाथ वसामि सततं मुदा ।
यमुनोपतटे रम्ये कुंजालीपरिमंण्डिते ॥८५॥
भवदागमनं तत्र वाञ्छन्ती च निरन्तरम् ।
केनापि भाग्यपुंजेन इक्ष्ये त्वां तत्र मोहन ॥८६॥
कृष्णः—कलकंठि गृहं गच्छ त्वद्विनोदाय तत्र हि ।
आगमिष्यामि कालेन नातिदूरेण लीलया ॥८७॥
वृन्दा—सापि कृष्णं नमस्कृत्य कुतुकान्वितमानसा ।
कूजंती मधुरं मन्दं संप्राप्ता स्वं निकेतनम् ॥८८॥
भृंगनाथमथाहूय निजवर्णांगधारिणम् ।
आस्वासयन् च वाणीभिः संप्राप्तः स स्वकं वनम् ॥८९॥
अथ हंसान्समाहूय प्रशुद्धान् विशदाशयान् ।
अपृच्छत्कुशलं प्रीत्या स्वरक्तान्नन्दनन्दनः॥९०॥
वसतिः कुत्र वो हंसा नित्यं संहृष्टमानसाः ।
किं कुर्वन्तो भवन्तो वै दिनशेषं नयन्त्युत ॥९१॥
हंसाः—वसामः सततं नाथ सरोवर्ये तु मानसे ।
तत्र त्वां नितरां चित्ते चिन्तयामः सदैव हि ॥९२॥
तव वंशीरवं श्रुत्वा घूर्णयामो मुहुर्मुहुः ।
लुठंतो वै जलोपान्ते धर्त्तुं स्वं नैव शक्नुमः ॥९३॥

कष्टेन लब्धसंज्ञानां त्वत्स्वरूपे च मोहन।
उत्कंठा जायतेऽस्माकं सादयत्यपि सा बलात् ॥१९४॥

मुहुर्मुहुः स्फुरत्यग्रे त्वन्मूर्त्तिर्लोकदुर्लभा।
लसदम्भोदचार्वंगी विद्युत्पीतवराम्बरा ॥१९५॥
शिखण्डेन कृतापीड़ा सुस्निग्धकचसंचया।
बिम्बाधरा सुदशना प्रस्फुरद्गण्डमण्डला ॥१९६॥
चलद्भ्रूश्च चलन्नेत्रा चलन्मकरकुंडला।
चलद्धारा सुकृद्देशे सुकंठे स्वर्णमालिनी ॥१९७॥

लसत्प्रलम्बदोर्युग्मा कटकांगदभूषिता।
किंकिणीभिर्लसन्मध्या चरणे चलनूपुरा ॥१९८॥
कैशोरेण बिभिन्ना तन्माधुर्य्यमधुरानना।
मन्दस्मिता सुलीलाभि र्मोहयन्ती मनोभवम् ॥१९९॥

तदा तां हृदये कृत्वा गोपयामः स्वके स्वके।
त्वदागमनलोलेण नयामो रजनीं दिनम् ॥२००॥
कदा तत्र समागत्य बन्यवेशेण भूषितः।
बिहरिष्यति गोबिन्दो नव्यगोपीगणैर्वृतः ॥२०१॥

द्रक्ष्यामस्त्वां कदा नाथ रासमण्डलमध्यगम्।
प्रियांसे न्यस्तदोर्वल्लितन्मुखार्पितलोचनम् ॥२॥

बृन्दा—इति हंसकुलैः प्रेम्णा नन्द्यमानः सजल्पनैः।
तानबोचद्धृषीकेशो यथा तेषां मनोगतम् ॥३॥

कृष्णः—युष्याकं च सुखार्थाय तत्रैवागत्य तादृशीम्।
क्रीड़ां हंसाः करिष्यामि तद् यात निजमन्दिरम् ॥४॥

बृन्दा—एवं सर्वानथाश्वास्य लीलया नृपलाञ्छनः।
बलदेवं तदा प्राह कृष्णः कमललोचनः ॥५॥

कृष्णः—ये शाखिनः फलधराः पुरो ग्रामसमोपमाः।
तूर्णं गोपा निरूप्यंतां तत्र राजांशसिद्धये ॥६॥



बृन्दा—राजवाक्यं समाकर्ण्य बलदेवो यथाभिधम्।
प्रेषयामास गोपालान् राजभागस्य साधने ॥७॥
द्वादशारण्यदेशेषु द्वादशाधिपतींस्तदा।
निरूप्य पुष्टगोपालान् प्रेषयत्स च तान् बलः ॥८॥

बृन्दाबनेऽथ श्रीमन्तं भद्रे बै भद्रदर्शनम्।
भाण्डीरे चन्द्रभानुं च चन्द्रवक्त्रं च बिल्वके ॥९॥
कामारण्ये कामरूपं खदिरे खद्यदम्बरम्।
कुमुद्वन्तं च कुमुदे महाबाहुं महाबने ॥१०॥
सुकेशं वहुलारण्ये दुर्द्धर्षं तालकानने।
रौद्रवीर्य्यं मधोर्वने लोहे स्वर्णकलेबरम् ॥११॥

एतेऽधिपतयो देशान् तांस्तु संप्रेषितास्तदा।
निवेद्य हरये गोपैः संबृताश्चपलेन ते ॥१२॥
तदा धूर्त्तं समाहूयावोचत्तं ब्रजपात्मजः।
लीलायाः सक्तहृदयः सर्वविद्याबिशारदः ॥१३॥

कृष्णः—ये गोपा मल्लयुद्धेषु निपुणाश्च निरर्गलाः।
तांस्तान्योजय तद्युद्धे तुल्यतुल्यबलानथ ॥१४॥

बृन्दा—एवमादिश्यमानोऽसौ धूर्त्तो धूर्त्तशिरोमणिः।
योजयित्वाथ तान युद्धे कृष्णतोषं व्यबर्द्धयत् ॥१५॥

सुबाहुं च प्रचण्डं च पुष्टांगं ब्रजमुष्टिकम्।
ब्रृहद्बाहुं सुपीनांसं दर्पकं दर्पमर्द्दकम् ॥१६॥
ते युद्धमाना निपुणा गोपाला मल्लबिद्यया।
स्वैः स्वैः पराक्रमैः कृष्णं नन्दयन्तो मुदं गताः ॥१७॥
कृष्णोऽपि तान यथायोग्यं वासोऽलङ्कारमालया।
अतोषयत्तुष्टमना लीलया नृपचेष्टितः ॥१८॥

ततस्ते देशपतयस्तत्तद्देशान्समागताः।
अर्पयन् ब्रजनाथाय फलपुष्पाण्यनेकसः ॥१९॥

बलदेवोऽथ सर्वेषां यथायोग्यं ददौ धनम् ।
कृष्णं निवेद्य मुदितो गृन्हात् किञ्चित्स्वयं तदा ॥२०॥
भक्षयित्वा फलान्येते प्रहस्य कुतुकान्विताः ।
आलिंगयन्तो गोविन्दं मुदं प्राप्ताश्च नन्दिनि ! ॥२१॥

एवं वयस्यसन्दोहै र्नानाकेलिपरायणः ।
संक्रीडते वने कृष्णो वर्णयामि किमद्भुतम् ॥२२॥
कदम्बतरुमारुह्य प्रियनर्म्मसुहृद्वृतः ।
समाह्वयति गोवृन्दं यथा नाम हरिस्तदा ॥२३॥
धवलां पिंगलां गौरीं कव्बुरीं कज्जलप्रभाम् ।
रक्तां च कपिलां धूम्रां लाक्षाभां श्यामलां शुभाम् ॥२४॥

माञ्जिठीं तिलकाकां च नीलांगीं मन्दगामिनीम् ।
सुष्ठुश्रृंगीमुग्रश्रृंगीं नम्रश्रृंगीं सुगामिनीम् ॥२५॥
कोकिलां सुष्ठुकंठीं च मयूरीं मञ्जुलोचनाम् ।
हरिणीं करिणीं व्याघ्रीं सुदुग्धां स्वर्णमालिनीम् ॥२६॥
सुच्छश्रृंगीं बृहच्छृंगीं चण्डवक्त्रां च चित्रिणीम् ।
विचित्रांगीं सुपुच्छीं च चरणीं कुमुदोज्वलाम् ॥२७॥

एवं तासां सुनामानि गृणन्नुच्चैः सम्भ्रमम् ।
भ्रामयित्वा पटं पीतं समाह्वयति केशवः ॥२८॥
ताः समाकर्ण्य कृष्णस्य मेघगम्भीरगर्जितम् ।
पुच्छं कर्णं समुद्धृत्य धावन्त्यस्तत्र संगताः ॥२९॥

तासां मुखानि पृष्ठानि संस्पृश्य निजपाणिना ।
हर्षं व्यवद्ध यत्कृष्णो यमुनावार्य्यपाययत् ॥३०॥
ततः कलिन्दजातीरे सद्द्रुमैरतिसंकुले ।
आसीनस्तत्र गोविन्दः सखीमण्डलमध्यगः ॥३१॥

तस्मिन्नवसरे तत्र रागिणी कृष्णवल्लभा ।
अम्बया प्रेषिता प्रेम्णा वनभोजनमानयत् ॥३२॥



सा विलोक्य प्रियं कृष्णं प्रीत्युत्फुल्लमुखाम्बुजा ।
तमुवोच निधायाग्रे भाजनं व्यंजनाप्लुतम् ॥३३॥

रागिणी—गृहाण नयनानन्द भोजनं कुरु सुन्दर ।
व्यंजनं बहुशो मात्रा त्वदर्थे प्रेषितं वने ॥३४॥
पायसं पूपकं दिव्यं मौक्तकं सूत्रलड्डुकम् ।
मष्टिकां व्यष्टिकां मिष्टां जल्लवल्लीमथादरात् ॥३५॥

मौद्गत्रिकोणकं सुष्टु मरिचाद्र्कसंयुतम् ।
निम्बूरसेन संसिक्तमेलाचूर्णेन चर्च्चितम् ॥३६॥
चणकस्य प्रकाराश्च वहु युक्त्या विनिर्म्मिताः ।
दधिप्लुताः सुसाकाश्च वटका वहु युक्तिकाः ॥३७॥
सघनं दधिमंडं च द्राक्षायाशिंचिचिणीरसे ।
सुपक्वाम्ररसे दिव्ये दाडिमीसु रसेषु च ॥३८॥

सितं भक्तं तथा पीतं मिष्टोदनं हिमोदनम् ।
शर्कराभिः शिखिरिणीं कर्पूरैश्च सुवासिताम् ॥३९॥
मुद्गसूपं घृताटोपं चणकस्याथ माषिकम् ।
तप्ताज्येषु च संमग्नां रोटिकां मृदुलोज्वलाः ॥४०॥
पूरिका वटकाः शुद्धा मुखशुद्धयर्थहेतवे ।
अन्यानि बहुरूपाणि किं नामानि वदाम्यहम् ॥४१॥

वृन्दा—एतच्छ्रुत्वा महोत्साहादुवोचत् मधुमङ्गलः ।
धन्यासि रागिणी प्रेम्णा नन्दयस्येव मादृशान् ॥४२॥
दुर्गाद्गोवर्द्धनात्सद्यः प्राप्तोऽहं तव संनिधिम् ।
भर्त्तुरेव निदेशेन गमितः कार्य्यसाधने ॥४३॥

तच्छ्रमेण परिव्याप्तः क्षुधाक्षीणकलेवरः ।
त्वां प्राप्य लब्धशरणां नन्दितोस्मि मुदान्वितः ॥४४॥

रागिणी—प्रयुक्तं ब्राह्मणस्यैकं कन्दमूलफलाशनम् ।
तस्मान्न याति मंदत्वं मतिस्तेषां कदाचन ॥४५॥

मधुमङ्गल:-अयि रागिणि मुग्धासि किं जानासि यथाविधि ।
तान् वर्णयसि किं विप्रान् तपः शुष्ककलेवरान् ॥४६॥
न चाहं तादृशो भद्रे नन्दपुत्रपरायणः ।
तस्य भुक्तावशेषं वै भक्षयामि दिने दिने ॥४७॥
क उन्मादो मदीयो वै मदयिष्यति यो मतिम् ।
स मया कृष्णः सत्प्रीत्या नीतो यद्विह्वलां गतिम् ॥४८॥

कृष्णः—व्यञ्जनानां मधुराणां सर्वेषां च यथाविधि ।
परिवेषय सर्वज्ञ त्वमेव मधुमङ्गल ! ॥४९॥

वृन्दा--पलाशपत्रिकां पुण्यां चषकानि वहूनि च ।
निरूप्य मण्डलीकृत्वा स्थिताः सर्वे व्रजार्भकाः ॥५०॥
तन्मध्ये स स्थितः कृष्णो वलदेवानुमोदितः ।
प्रियनर्म्मसुहृद्युक्तः प्रफुल्लवदनाम्बुजः ॥५१॥
कृष्णस्य पत्रिकायां च प्रथमं पर्य्यवेषयत् ।
ततश्च वलदेवस्य ततश्चोत्तरमुत्तरम् ॥५२॥
स्वकीयपत्रिकामध्ये यथेच्छं पर्य्यवेषयत् ।
भक्षयन्तोऽ[illegible] गोपालाः सहसन् हासयन् हरिम् ॥५३॥
केचित्कस्यापि वक्त्राब्जे छलेनैव सुपायसम् ।
दधीनि नवनीतं च लेपयन्तो मुदं गताः ॥५४॥
केचित्परस्परं दृष्ट्वा लड्डुकादि प्रचालनैः ।
क्रीडन्तः कृष्णचन्द्राय परानन्दं व्यवर्द्धयत् ॥५५॥
अन्योयं व्यंजनं स्वादु स्व[illegible]यन्तो यथा रुचि ।
दधिदुग्धस्य गण्डूषैः छलेनान्यमसिञ्चयत् ॥५६॥
कृष्णोऽपि निजहस्तेन ददाति कबलं मृदु ।
सुवलस्य मुखे प्रेम्णा स्निग्धं रुचिविवर्द्धनम् ॥५७॥

कृष्ण:--वयस्यास्वादयस्वैतत्कबलं मधुरं वरम् ।
याचसे वा शिखरिणीं पाययामि स्वपाणिना ॥५८॥



वृन्दा—चटुलोऽथ यथायुक्तं व्यञ्जनं निजपाणिना ।
कृष्णपाणौ ददात्येवं भुंक्तेनन्दनन्दनः ॥५९॥
एवं मित्रगणैर्युक्तो भोजनं कुरुते हरिः ।
यमुनातोयमत्यच्छं पीतं च परमादरात् ॥६०॥
विचित्रः कृष्णचन्द्राय तदा ताम्बूलवीटिकाम् ।
रचयित्वा सकर्पूरां निवेदयति सादरम् ॥६१॥
रागिणी कृष्णवदनं विलोक्य च मुहुर्मुहुः ।
प्रगृह्य सर्वपात्राणि नन्दिता वृजमागमत् ॥६२॥
तदा वृक्षान्तरे कृष्णः प्रियानुगगणैर्वृतः ।
संप्राप्तो यत्क्षणं तत्र संविश्रमितुमुत्सुकः ॥६३॥
तत्र चित्रविचित्राभ्यां रचिता पुष्पपल्लवैः ।
शय्या सुमृदुला दिव्या सुष्वाप मधुसूदनः ॥६४॥
सुवलः स्नेहसंसक्तः संवाहनमथाकरोत् ।
भुजे हस्ततले मन्दमंगुलीः स्फोटयंस्तदा ॥६५॥
पाणिना चटुलस्तत्र चरणौ समवाहयत् ।
व्यजनं कुरुतस्तत्र द्वौ [illegible] चित्रविचित्रकौ ॥६६॥
धूर्त्तः सुवाक्यरचनै र्गोविन्दं स ननंदयत् ।
सुमुखो द्वारदेशस्थो मर्मज्ञा नऽवारयत् ॥६७॥
ततस्तस्मात्समुत्थाय सुवयस्यगणैर्वृतः ।
यमुनां मज्जनायासौ प्राविशन्नन्दनन्दनः ॥६८॥
परस्पराभिषिञ्चतो जलस्यांजलिना [illegible] ।
मर्यादामथ ते कृत्वा तरणाय समुद्यताः ॥६९॥
आसीनाश्च प्रसुप्ताश्च केचिन्निश्चलचेष्टिताः ।
अतरन् यमुनाया वै पारावधि मुदान्विता॥७०॥
कोऽपि कस्य पदं मन्दं निमग्नो यमुनाजले ।
विकर्षत्यल्पवीर्येण त्यक्त्वा मोदयते च तम्॥७१॥

स्नापयंस्तत्र गोविन्दं सुबलश्चद्भुतस्तदा ।
स्वपाणिना जलं नीत्वा शनैस्तस्यांगमार्जनैः ॥२७२॥
सुबलस्य यत्स्कन्धे कृष्णः संधाय दोर्लताम् ।
जलाद्बहिर्गतस्तत्र यत्र शृङ्गारमण्डपः ॥७३॥

ततश्चित्रविचित्राख्यौ सुवन्योपस्करानपि ।
आनीतवन्तौ कृष्णस्य शृङ्गाराय यथाविधि ॥७४॥
विधायाभूषयत्कृष्णं वन्यवेशमपूर्वकम् ।
नटवद्दिव्यरूपं च मनोभवमनोहरम् ॥७५॥

शीर्षं शिखण्डकापीडं गुञ्जामणिविमण्डितम् ।
कर्णयोः कर्णिकारस्य स्तबकानदधात्तदा ॥७६॥
नानाधातुमयं चित्रं नीलाम्बुदकलेवरे ।
अलिखद्दिव्यरचनैर्वैजयन्तीं च वक्षसि ॥७७॥

एवं संभूषितः कृष्णो वन्योद्भवपरिष्करैः ।
लसत्पिशङ्गपटः साक्षात्कन्दर्पस्यापि शोभनैः ॥७८॥
निधाय वेणुमधरे वादयन्मधुरस्वरम् ।
सुरभीस्ताः पुरस्कृत्य कृष्णो गोष्ठं समाविशत् ॥७९॥

गोपालमण्डलैः कामं मण्डितो नन्दनन्दनः ।
संप्राप्तोऽद्भुतलीलाभिस्तदा कोलाहलो भवत् ॥८०॥
केचिद्वेणुं वादयन्तः शृङ्गं पत्रं च केचन ।
नृत्यन्तोऽप्यथ गायन्तः हसन्तश्च मुदान्विताः ॥८१॥

धवलान्योधयन्तश्च तीक्ष्णशृङ्गान्मदान्वितान् ।
वहन्तश्च हरौ प्रेम यत्त्रैलोक्येऽपि दुर्लभम् ॥८२॥
वनादागमनं वीक्ष्य व्रजे कृष्णस्य नन्दिनि !
देवाः संतुष्टमनसो वर्षन्सुकुसुमचयम् ॥८३॥
गोप्यो निशम्य कृष्णस्य कोलाहलमथागमं ।
विनिर्गत्य गृहात्तूर्णं मुदितास्तत्र संगताः ॥२८४॥



विलोक्य कृष्णचन्द्रस्य मुखं पीयूषनिर्झरम् ।
धेनुरेणुच्छन्नकेशं सुस्मितं विलसद्भ्रुवम् ॥२८५॥
चलन्नेत्रान्तवीचिभिर्मञ्जयन्वै वधूमनः ।
ताः सर्वा मोहमापन्नास्तस्य रूपविलोकनात् ॥८६॥

रोमाञ्चपुञ्जव्याप्ताङ्ग्यः स्रस्तधम्मिल्लमल्लिकाः ।
स्खलन्नीव्यः कौतुकेन स्थितास्तत्रैव नन्दिनि ॥८७॥
कृष्णोऽपि ताः सुदृष्ट्या च विलोक्य मकरध्वजम् ।
अवर्धयद्बलं तासां कुललज्जानिषूदनम् ॥८८॥

यशोदा सा समाकर्ण्य कृष्णस्यागमनं व्रजे ।
नीराजनं समादाय प्रत्युद्गच्छति वत्सला ॥८९॥
विलोक्य सा पुत्रवक्त्रं चण्डकोटि समप्रभम् ।
नीराजयित्वा भवनमानिनायातिलोभिनी ॥९०॥

पटाञ्चलेन सद्यः सा तदास्यं स्वेदबिन्दुना ।
अमार्जयन्मण्डितं किं प्रेम्णा ह्लादं वदामि ते ॥९१॥
तदा सा रागिणी साध्वी व्यजनेनान्ववीजयत् ।
वन्योपस्करवृन्दानि समुत्तारयते सुखम् ॥९२॥
उद्वर्तनं सुरभि यत्समानीय च रागिणी ।
तैलाभ्यङ्गं हरेर्गात्रे करोति स्म यथासुखम् ॥९३॥

ततः उद्वर्तनं कृत्वा साधयित्वा च मूर्द्धजान् ।
अखण्डजलधाराभिः स्नापयत्पुष्पवारिणा ॥९४॥
शुद्धेन वस्त्रेण शनैः संमार्जयति कोविदा ।
परिधापयति स्माथ रक्तक्षौमं सुकोमलम् ॥९५॥
उष्णीषं च यथायोग्यं रक्तं पीतं च चित्रकम् ।
उत्तरीयं तडिद्वर्णं समर्पयत केशवे ॥९६॥
अत्र भोजनशालां स्वां प्रेक्षमाणो व्रजेश्वरः ।
तत्रागत्य स्म सबलो भोजनं कुरुते हरिः ॥२९७॥

ततः सुवीटिका दत्ता रागिण्या मुखशुद्धये ।
लाल्यमानो यशोदया व्यचरद्भवने क्षणम् ॥२९८॥
ततः सुचित्रयष्टिं च निगृह्य निजपाणिना ।
कटिवस्त्रे सुबेणुं च धृत्वा बहिरगाद्धरिः ॥९९॥

प्राबिशन्स महद्गोष्ठं सुरभीबृन्दमण्डितम् ।
रम्भमाणायतो बत्साः स्तनपानार्थिनो मुहुः ॥३००॥
गावस्तत्प्रेम संक्लृप्ताः पयः पूरानसुश्रवन् ।
हुंकारं चापि कुर्व्वन्त्यो लिहन्त्यस्तन्मुखाम्बुजम् ॥३०१॥
गोष्ठद्वारे तु गोबिन्दः संस्थितः स्वसुहृद्बृतः ।
दोहनानि समाधाय यत्रागच्छंश्च गोपिकाः ॥३०२॥

सर्वांगमदनस्फूर्त्तिमाधुर्य्यमधुराननः ।
नारीवर्गे तदा काचिज्जाता रतिरपूर्बिका ॥३०३॥
लोभ्यांगी बनितां दृष्ट्वा हृदि क्षोभमलक्षितम् ।
वहत् कृष्णश्च तां स्पष्टं कामनां कुरुते हि सः ॥४॥

प्रदोषारम्भतमसि तन्बालदयस्तमालबत् ।
नव्यांगीं बनितां दृष्ट्वा कृष्णो मोदं तनोति हि ॥५॥
आगच्छत्याः कदाचिद्वै तस्याः पीनस्तनौ हरिः ।
स्पृष्ट्वा स्वपाणिना मोदं छलाद्व समवर्द्धयत् ॥६॥
तदा गोदोहनं तत्र करोति स्म मुदान्बितः ।
नानोपायेन बिधिना बत्सेभ्यः शेषमुद्वहन् ॥७॥
यत्र नव्यकिशोरीषु दृष्टिक्षेपं करोति सः ।
तस्या धेनुं स्वयं कृष्णः दुग्धातिकुतुकान्बितः ॥८॥
कांचिदालोकयन कृष्णः स्मित्वा वै दुग्धधारया ।
चित्रयंस्तन्मुखं साथ व्याबर्त्तयत कन्धराम् ॥९॥
कृष्णेन दुग्धकलशा रागिण्याः संगसंगताः ।
प्रेषितास्तु तदा गेहं निजधेनुसमुद्भवाः ॥३१०॥



ततो गोष्ठादथान्यत्र स्वनर्मसखिभिर्बृतः ।
करोति कामलीलायां यत्नसाधनमद्भुतम् ॥३११॥
ततश्च रागिणी कृष्णमाह्वातुं च समागता ।
मात्रा संप्रेषिता प्रेम्णा शयनार्थं च नन्दिनि ॥१२॥

रागिणी-नागरागच्छ भवने स्वापं कुरु यथासुखम् ।
व्यतीतातिनिशेदानीं माता त्वामाह्वयत्यसौ ॥१३॥
ततः कृष्णोऽपि रागिण्याः संगेन गृहमाबिशत ।
यशोदा स्नेहसंयुक्ता प्राह तं परमादरात् ॥१४॥

यशोदा—क्रीडायां वत्स किमिति प्रलुब्धोऽसि सदैब हि ।
यद्रात्रौ चापि भवनं न स्मरस्येव सुन्दर ! ॥१५॥
ज्ञातं चातिविहारेण प्राप्तस्त्वं कृशतां यतः ।
कथमद्यापि त्वं बत्स न विरक्तोऽसि केलितः ॥१६॥

बृन्दा—मुहुर्मुहुर्यशोदा तन्मुखं संमार्ज्य पाणिना ।
सुपाचितं पयः कृष्णं सशर्करमपाययत ॥१७॥

बिनोदमन्दिरे तस्मिन्यन्मया वर्णितं पुरा ।
स्वापयति स्म शय्यायां स्वयं कृष्णं ब्रजेश्वरी ॥१८॥
रागिणी कृष्णचरणौ संवाहयति रागिणी ।
कथयन्ती कथां चित्रां निद्रां संजनयत्यथ ॥१९॥

गोकुलस्येश्वरी तत्र स्थित्वा स्नेहं व्यवर्द्धयत् ।
याबच्छलेन बिश्रम्भान्निद्रां प्राप्तो भवद्धरिः ॥२०॥
सुप्तं बिलोक्य तनुजं यशोदा पुत्रवत्सला ।
स्वयं स्वगृहमागत्य शयनं कुरुते हि च सा ॥२१॥

क्षणं बिमृश्य गोबिन्दो रागिण्याः संमतस्तदा ।
तत्रागच्छन्सुविपिने कुञ्जकेलिपरायणः ॥२२॥
अपि रात्र्यबशेषे सः प्रियसंगानुमोदितः ।
तत्रैव पुनरागत्य शेते स्माथ यथा पुरा ॥३२३॥

एवं छलेन श्रीकृष्णो वंचयित्वा गुरून् सखि ।
आलम्ब्य लोकमर्य्यादां कामकेलिं करोति हि ॥३२४॥
कृष्णस्यानुदिनं चैव तां लीलां नित्यनूतनाम् ।
किं वर्णयाम्यहं भद्रे परमानन्ददायिनीम् ॥२५॥
श्रद्धया कृष्णचन्द्रस्य गोपकेलिं मनोरमाम् ।
शृणोति तस्य गोबिन्दे रतिर्भवति निश्चला ॥३२६॥
इतिश्रीकृष्णकौतुके गोचारणबिहारो
नाम प्रथमः सर्गः ॥

## ❀ द्वितीयसर्गः ❀

वृन्दा—एवं नित्यं वने गत्वा नानाकेलिपरायणः ।
संक्रीडते सुहृद्वृन्दैः संवृतो नन्दनन्दनः ॥१॥
नन्दिनी—भगवत्यद्भुतं साक्षाद्धरेर्गोपालचेष्टितम् ।
श्रुतं तव मुखाम्भोजात्परमानन्ददायकम् ॥२॥
धन्यास्ते ये व्रजे बालाः गोपालाः कृष्णसंगिनः ।
विहरन्त: सदा प्रेम्णा तच्चित्तास्तत्परायणाः ॥३॥
तत्रापि सुवलाद्या ये सुवयस्या हरेर्धृतः ।
स्नेहसंप्लुतचित्ताश्च सततं संगवर्त्तिनः ॥४॥
को वै वर्णयितुं योग्यो भाग्यगौरवमुद्भटम् ।
तेषां येऽपि क्षणं कृष्णं न त्यक्तुं शक्नुवन्ति हि ॥५॥
अथ वर्णय मां सर्व्वं कृष्णं प्रति यथा वने ।
भवत्या कथितं तस्या राधाया रूपसौष्ठवम् ॥६॥
एतत्प्रसंगश्रवणे मनो मे कुतुकान्वितम् ।
तत्कथा विस्तरं सम्यक् कथयस्व विचक्षणे ! ॥७॥
वृन्दा—प्रातरेवैकदा कृष्णः पशूंश्चारयितुं बने ।
संप्राप्तश्चाकृताहारो नानाकेलिपरायणः ॥८॥



धेनूनामतिलुब्धानां मुक्त्वा यूथं हरित्तृणे ।
स्वयं च नर्म सखिभिः प्रावृतो व्यचरद्वने ॥९॥
तस्मिन्नेव स्म काले याः किशोर्य्यो घोषयोषितः ।
आगच्छन्ति रवेः पुत्र्यां मज्जनाय कुतूहलात् ॥१०॥
गौरीं पूजयितुं सर्व्वाः सुमनांसि बने मुदा ।
कृष्णं कन्दर्पदर्पघ्नं विचिन्वंत्यः समासदन् ॥११॥
अपश्यन् विस्मिताः सर्वा ह्रिया साध्वससंगताः ।
संवेपमानांगयष्ट्यः स्वेदमुख्योऽतिविह्वलाः ॥१२॥
न च वक्तुं न गन्तुं ताः समर्थास्तद्वनान्तरे ।
यथा कुरङ्ग्यः क्षुभिता स्थितास्तत्रैव नन्दिनि ! ॥१३॥
किं वर्णयाम्यहं तासां सौष्ठवं भुवनोत्तरम् ।
याः स्वैः कटाक्षसंक्षेपैः कुर्व्वन्ति स्ववशे हरिम् ॥१४॥
एवमुद्विग्नचित्तास्ता वीक्ष्यमाणा मुहुर्मुहुः ।
स्वसख्याः पद्धतिं तत्र निजनिर्मुक्तिवांछिकाः ॥१५॥
कृष्णस्तासां किशोरीणां रूपलावण्यमोहितः ।
धूर्त्तं प्राहेदमाहूय तर्जय त्वं स्वजल्पनैः ॥१६॥
धूर्त्तः—किं यूयं वनमागत्य विध्वंसथ सुवाटिकाम् ।
सुरङ्गकुसुमाकीर्णां पालितां बनमालिना ॥१७॥
कथं भवंत्यः सहसा बनेशस्य महार्गलाम् ।
चरन्ति निर्भयं त्यक्त्वा वनकेलिपरायणाः ॥१८॥
अस्यापराधिकाः सर्वा भवंत्यो राजशासने ।
दंड्याः शीघ्रं यथायोग्यमुत्तरं दीयतां वत ॥१९॥
कृष्णः—मयापि लक्षितं सर्वं सवासां चौर्य्यलक्षणम् ।
आसामङ्गेषु भो धूर्त्त दृश्यन्ते त्वं बिलोकय ॥२०॥
आसां वक्त्रेषु पद्मानां प्रकटस्तस्करीगुणः ।
नासायां तिलपुष्पस्य नेत्रे चेन्दीवरस्य च ॥२१॥

मधूककुसुमानां तु गण्डे च रदनच्छदे ।
स्फुटं च वन्धुजीवनां चौर्य्यलक्षणमद्भुतम् ॥२२॥
कपोतीनां कंठशोभां हृत्वा कण्ठे स्वके वत ।
वहन्त्यः किं वदाम्यासांमतिधाष्ट्य समुद्भटम् ॥२३॥

अपि पश्य महाश्चर्य्यं वर्त्तुलानि फलान्यपि ।
प्रचौर्य्य हृदये स्वे स्वे सर्वाभिर्गोपितान्यपि ॥२४॥
चम्पकानां सवर्णाश्च निजवर्णे विकल्पिताः ।
दाडिमी च्छविमाहृत्य वहन्त्यो दन्तपंक्तिषु ॥२५॥

शिखिणां च पिच्छलक्ष्मीं चोरयित्बा स्वमूर्द्धजैः।
सा शोभा स्थापिता तत्र किमन्यद्वर्णयामि ते ॥२६॥
कंठध्वनिः कोकिलानामासां कण्ठेषु दृश्यते ।
गतयश्चमरालानां तत्तस्कर्य्यो न संशयः ॥२७॥

तत्कथं वत मद्राज्ये चौरा लुम्पन्ति मत्प्रजां ।
लोकानां हि सुखार्थाय करिष्ये दण्डसाधनम् ॥२८॥
तस्मादासां स्वयमहं ददामि नृपयातनाम् ।
खण्डनैः पीडनैर्वन्धैर्यथा योग्यं निजेच्छया ॥२९॥

इत्युक्त्वा तदुपसृत्य संप्रष्टं च कृतोद्यमे ।
कृष्णेऽभिलाषसंयुक्ते सर्वास्त्रस्ता अभवंस्तदा ॥३०॥

धूर्त्तः—परबित्ततस्करीणां मत्तानां त्रिमदेन च ।
गव्येन नव्यकैशोरदेवता पूजनेन वै ॥३१॥
तद्युक्तमासां दंडो हि त्वया सम्यक् विचारितम ।
अपराधिकानां गोविन्द यथेच्छं कर्त्तुमर्हसि ॥३२॥

तथापि यदिमाः सर्वाः स्वदोषस्योपशान्तये ।
त्वयमेब तवैवाज्ञां कुर्व्वन्ति क्षम्यतां तदा ॥३३॥

बृन्दा—एवं ताः सुमहाधूर्त्तं लोभयन्तं स्वबिद्यया ।
धीरा पुष्पसखी प्राप्ता प्राह संरम्भसंभरात् ॥३४॥



वारं वारमुदीर्य्यालं रे रे धूर्त्तशिरोमणे ! ।
कस्मात् कुलबधूरेताः कदर्थयसि कानने ॥३५॥

धीरा—अतिकालो हि जातोऽयं देवतापूजने यतः ।
त्वया निरुद्धा मुग्धास्तन्नीतं किं तब लम्पटम् ॥३६॥

स्नानार्थिन्यो व्रतयुता देबतार्च्चनतत्पराः ।
ताः किं परुषवाणीभिस्त्रासयस्यबिचक्षणे ॥३७॥

धूर्त्तः—किं त्वं वा बालिके धीरे प्रजल्पसि निरर्गलम् ।
नहि जानासि किं यत्र गोबिन्दस्तिष्टति प्रभुः ॥३८॥

चोरयन्ति बने पुष्पं तस्करीगुणकोविदाः ।
किमिमा लब्धशरणाः पलायिष्यन्ति मेऽग्रतः ॥३९॥

धीरा—किं मां त्वं दर्शयस्यत्र गवेन्द्रं स्वप्रभुं खलु ।
नाहं च कातरा धूर्त्त धीरेति जगति स्फुटा ॥४०॥

यदेतत् काननं नित्यं स्वयंसिद्धमबिच्युतम ।
किं निर्म्मितं त्वत्प्रभुणा यन्मम त्वं बिकल्पसे ॥४१॥
बिचरन्तो यथा नित्यं लीलया युष्मदादयः ।
तथैब गोपबध्वोऽपि बिचरन्ति यथेच्छया ॥४२॥

न कस्यापि भयं यत्र परमानन्दनिर्वृताः ।
यथेष्टं मोदमानाश्च विहरन्ति बने बने ॥४३॥

बृन्दा—इत्युक्त्वा सा च सर्वास्ता न्यवर्त्तयत पाणिना ।
किं बिभीथ बृथा मुग्धा यत्राहं संगबर्त्तिनी ॥४४॥
इति तस्याः बचः श्रुत्वा संजातास्तुष्टमानसाः ।
लब्धसंज्ञाश्च सर्वास्ताश्चलखञ्जनलोचनाः ॥४५॥

क्षोभिताः कृष्णरूपेण स्नेहव्याकुलचेतसः ।
वंचयित्बा च तां व्याजैः पश्यन्त्यस्तन्मुखाम्बुजम ॥४६॥
तदा धूर्त्तः पुनः धीरां प्राहेदं कृष्णनोदितः ।
लीलासक्तस्य प्रेष्ठस्य विनोदाय च नन्दिनि ! ॥४७॥

धूर्त्ता:—अज्ञातवैभवे धीरे किं जानासि यथार्थतः ।
बृन्दाबनेश्बरः कृष्णोऽनीशवरत्वं कथं प्रभो ॥४८॥
तस्मादस्मिन्बने रम्ये बरीवर्त्ति हि नित्यदा ।
निदेशोऽस्य महीशस्य कर्त्तव्यो युष्मदादिभिः ॥४६॥

शिष्टानामितिवाक्यानि शृणु धीरे वदामि ते ।
स्वमर्य्यादां परित्यज्य न बाच्यं राजसंनिधौ ॥५०॥
धीरा—त्वं किमुद्दण्डमुद्राभिर्विभीषयसि मामपि ।
गोरक्षाख्यां स्वकां बृत्तिं नृपचेष्टां विकल्पयसे ॥५१॥
एवं बुद्धिबलोपायैः कातर्य्यं बर्द्धयन् खलु ।
कामिनीरथ कान्तारे स्ववशे कुरुषे यतः ॥५२॥

तत्स्वकां तु महाबिद्यां क्षणं संहर्त्तुमर्हसि ।
यावदत्र स्थिता धीरा सर्वविद्याबिशारदा ॥५३॥
नाहं च तादृशी या तु मायया मोहमाप्नुयाम् ।
इन्द्रजालस्य विस्तारैः विरमस्व ममाग्रतः ॥५४॥
धूर्त्त:—किं न पश्यसि मुग्धे त्वं श्रीकृष्णं नृपलाञ्छनम् ।
यद्वन्योपस्करैर्दिव्यैः सर्वांगेऽपि विभूषितम् ॥५५॥
लसच्छिखण्डकापीडं गुञ्जापुञ्जैः सुरञ्जितम् ।
भृङ्गानां मोहजनकं सुस्निग्धघनमूर्द्धजम् ॥५६॥
बिशालनयनाम्भोजं कामकार्मुकसद्भ्रूकम् ।
सुनासं सुस्मितं श्रीमत्कर्णान्दोलितकुण्डलम् ॥५७॥
सुकपोलं सुदशनं बन्धुजीवोपमाधरम् ।
सुकम्बुकण्ठं श्रीमन्तं बनमालाविभूषितम् ॥५८॥
चारुबिस्तृतदोर्युग्मं स्वीयानामभयप्रदम् ।
पीनांसं च बृहद्वक्षो वैजयन्त्याभिरञ्जितम् ॥५९॥
मुखपद्मं हस्तपद्मे पादपद्मे सुशोभितम् ।
पद्मानुलालितं पदं ब्रजबध्वः किमत्र हि ॥६०॥



सान्द्रमेघसदृक्षाङ्गं तडिनसंमिलिताम्बरम् ।
सुकैशोरवयः कांतं मधुरं मधुराकृतिम् ॥६१॥
यस्य सन्दर्शनात्सद्यो मनस्तस्मिन् प्रलीयते ।
न पुनर्गृहकार्य्येषु बुद्धिर्भवति तादृशी ॥६२॥

तस्मान्महामोहनं च भूपरूपं बनेश्बरम्
को न पश्येन्नेत्रयुक्तो हृदयाभीष्टदायकम् ॥६३॥
यस्मादस्यैव नृपते र्निदेशो बिश्वमोहिनः ।
निधाय मूर्ध्नि नित्यं वै वर्त्तितव्यं वनान्तरे ॥६४॥
बृन्दा—इति धूर्त्तवचः श्रुत्वा बिलोक्य च हरिं मुहुः ।
मुग्धानामथ का वार्त्ता धीरा मोहं समागमन् ॥६५॥
धीरा--साम्प्रतं क्षम्यतां नाथ सर्वासामागसां भरः ।
अतः परं तवाज्ञायां वर्त्तिष्यन्ते हि सुन्दर! ॥६६॥
कृष्णः--धीरे यदासां निर्मुक्तिं याचसे नमितानने ! ।
फलपुष्पसमानं बा किञ्चिदन्यत्प्रदीयताम् ॥६७॥
बृन्दा—इति धीरा निशम्याथ कृष्णस्य मृदुजल्पितम् ।
तासां मुखानि पश्यन्ती श्रीकृष्णं वक्तुमुद्यता ॥६८॥
धूर्त्ता:—यदि ते रोचते नाथ पुष्पानां वर्णसूचकान् ।
रत्नमुक्तागणानासां गृहाण ब्रजभूषण ! ॥६९॥
श्रीफलानामभावे तु त्वदीयहृदयेऽस्ति यत् ।
गृहाण नयनानन्द ! बशगास्ते ब्रजाङ्गनाः ॥७०॥
कृष्ण:—फलानां स्यात्कुतोऽभावो यद्दृश्यन्ते पटान्तरे ।
देहेष्वासामपि ततो युक्तमात्मनिवेदनम् ॥७१॥
धीरा---यदुक्तं हि मया नाथ वर्त्तिष्यंते च ते बशे ।
देवतापूजने भीताः साम्प्रतं त्यक्तुमर्हसि ॥७२॥
धूर्त्ता:--कामचर्चयन्ति सुदृशः किमाकाङ्क्षन्ति सत्फलम् ।
यस्मात्प्रातः समुत्थाय चरन्ति ब्रतमुत्तमम् ॥७३॥

धीरा—नित्यं कात्यायिनीं गौरीं तत्पराः पूजयत्यमूः ।
निजाभीष्टस्य लाभाय धेनूनामपि वृद्धये ॥७४॥
धूर्त्तः—अहो मौग्ध्यं च गोपीनां यज्जानन्ति यथाविधिं ।
निजेष्ट तदेवंदपि त्यक्त्वान्यं च भजन्ति याः ॥७५॥

कथं गोवर्द्धनं धीरे न भजन्ति व्रजाङ्गनाः।
यस्मात्स्वसेवया तुष्टो वर्द्धयत्यापि वाञ्छितम् ॥७६॥
नीलनीरदसंकाशं शिखण्डाकीर्णशेखरम् ।
पीततुष्पपरागेण परीतं सुकटिस्थलम् ।७७।
नानाधातुविचित्राङ्गं बनमालाभिमण्डितम् ।
प्रस्फुरद्वंशनिनदं गोगोपालसुखप्रदम् ॥७८॥

स्वच्छायया पुरा येन रक्षितं व्रजमण्डलम् ।
कथं तं च परित्यज्य बिभ्रमन्ति यतस्ततः ।७६।
नन्दिनी–देबि ! नन्दात्मजे कृष्णे स्नेहसंवर्द्धनाय वै ।
व्रजाङ्गनानां किं वुद्धिरभूद्देव्यचर्चनात्खलु ॥८०॥
बृन्दा—स्वयंसिद्धो हि यः स्नेहस्तासां कृष्णेऽस्ति नन्दिनि ! ।
परं वनविहाराय देवतापूजनं छलम् ॥८१॥

इतिधूर्त्तबचः श्रुत्वा धारा संलक्ष्य हृद्गतम् ।
प्राह तं च यथायोग्यं कृत्वा वाक्यस्य पाटवम् ॥८२॥
धीरा—गोवर्द्धनं प्राणदं का विस्मारयति चेतसा ।
अचलं वा चलं बा च सर्वास्तत्सेबने रताः ॥८३॥

व्रजबध्वः कौतुकिन्यो ह्यागच्छन्ति बनान्तरे ।
एतामामिङ्गितं सर्वं जानीते नन्दनन्दनः ।८४।
गोविन्दं एवमानन्द्य धीरा सुपटुजल्पनैः ।
पुरस्कृत्य किशोरीस्ता आगता यमुनातटम् ॥८५॥
ताः किशोर्यः कृष्णवक्त्रं पश्यन्त्यः स्वछलात्किल ।
कष्टात्तदनुराधेन याता धाराभिसंमताः ॥८६॥



कृष्णेन प्रेषितो धूर्तो धारां प्रष्टुं तदा सखिम् ।
अभिसाराय तासां वै पटुवाक्यान्यभाषत ॥८७॥
मधुमङ्गलसंयुक्तः क्रीडमानो हरिस्तदा ।
कलिन्ददुहितुस्तीरे संप्राप्तश्च क्षुधान्वितः ॥८८॥

अहं च पर्णशालायां पूर्णमास्यास्तु तत्क्षणे ।
संप्राप्ता तां मन्त्रयितुं राधिकाकृष्णसंगमं ॥८६॥
कृष्णोऽपि नातिदूरे सा दृष्ट्वा तत्पर्णशालिकाम् ।
संप्राप्तो नयनानन्दः क्षणं विश्रमितुं ततः ॥६०॥
तदा बिलोक्य गोविन्दं पूर्णमासी मुदान्विता ।
सावर्णयत तद्रूपं विरिञ्च्याद्यतिदुर्ल्लभम् ॥६१॥
पूर्णमासी—किमायाति घनश्यामो लसत्सौदामिनीपटः ।
मयूरचन्द्रिकापुंजैः परिशोभितशेखरः ॥६२॥
बनमाली लसत्कर्णे कर्णिकारेण भूषितः ।
कुटिलालकभृङ्गालिपरिशोभिमुखाम्बुजः ॥६३॥

चन्दनेन विचित्रांगो धुन्वन्पद्मं सुपाणिना ।
शालां मे सफलां कुर्यात्स्वपदस्थापनै र्ध्रुवम् ॥६४॥
बारम्बारमुदीर्य्यैवं वाष्पपूरितनेत्रया ।
उद्गत्यैव समानीतः स्वकुट्यां नन्दनन्दनः ॥६५॥

वीक्षयंती तन्मुखं प्रेम्णा श्रमाविन्दून्स्वपाणिना ।
मार्जयंती मुदं प्राप्ता वर्णयामि किमद्भुतम ॥६३॥
मयापि तस्मै कृष्णाय प्रश्रयेण नमस्कृतम ।
अनन्दयन्मां सुदृष्ट्या वचनैरपि कोमलैः ॥६७॥

तदा तपस्विनी सा तमुपवेश्यासने बरे ।
यत्सिद्धं तत्क्षणे तस्य भोजनाय समानयत।६८।
रम्भादलेषु सर्वं तत्परिवेशयति स्म सा ।
भोज्यमानस्य कृष्णस्य मुखं दृष्ट्वा मुदं गता ॥६६॥

मधुमङ्गलं सुबलं यथेच्छं तानभोजयत् ।
शीतलं जलमादाय पाययंती यथा रुचि ॥१००॥
बीजयंती शनैः कृष्णं व्यजनेनातिलोभिनी ।
कृष्णो मदाश्रमायात इति मत्वा मुदं गता ॥१०१
मुखशुद्धिं तदावेद्य पृच्छंती च मुहुर्मुहुः ।
कथं मां सफलीं कुर्य्याद्धन्त शे सुविचारयत् ॥१०२

कृष्णः—भगवत्यच्युताहारः संप्राप्तोऽहं बनान्तरे ।
क्षुधान्वितो भवत्कुटयां सवयस्यः समागतः ॥१०३॥
पर्णशालां तव द्रष्टुं सदोत्कण्ठितमानसः ।
तस्मादेवागतोऽस्म्यत्र नमस्काराय चानघे ॥१०४॥
इति कृष्णवचः श्रुत्वा सातिप्रेमभराकुला ।
अवदत्सुधया वाचा तदानन्दं ययवर्द्धयन् ॥१०५॥

पूर्णमासी-नन्दनन्दन कामं त्वं लीलालोभितमानसः ।
न पिपासां स्मरसि यत्क्षुधां वापि मनोहरम् ॥६॥
कथं जनन्या कष्टेन दुर्णान्निर्वाहितः क्षणः ।
अभुंक्त्वाथ बने प्राप्तो यतस्त्वं नेत्ररञ्जनः ॥७॥
किं वर्णयामि तस्याश्च वात्सल्यं जगदुत्तरम् ।
यया च त्वामपश्यंत्या क्षणो नेतुं न शक्यते ॥८॥

बृन्दा--अपि प्रेम कीर्त्तिदाया तादृशं भगवत्यलम् ।
स्वपुत्र्यां या क्षणं त्यक्तुं न समर्था गृहाद्बहिः ॥६॥
अद्वैतं रूपिणी सापि रूपलावण्यकौशलैः ।
अन्या न निर्म्मिता लोके ब्रह्मणा तादृशी यतः ॥१०॥

पूर्णमासी-सत्यं बदसि वृन्दे त्वं सापि पुत्रीपरायणा ।
गतायां सुर्य्यपूजायामदृष्ट्वा परितप्यति ॥११॥

कृष्णः--वृन्दे वदस्व का तस्याः पुत्री सौन्दर्य्यशालिनी ।
किं नामा या मया पूर्वं न दृष्टा न श्रुता क्वचित् ।११२।



बृन्दा--चन्द्रानन प्रलोभ्यांगी राधाख्या जगदुत्तरा ।
यां रक्षन्ति प्रयत्नेन गुरवो गौरवान्विताः ॥११३॥
इत्याकर्ण्य च गोविन्दस्तस्या नामाक्षरद्वयम् ।
रागमुद्रां तदा तस्यामादधे क्षोभिताशयः ॥१४॥
अपूर्वेयं गतिस्तस्य जाता तस्मिन्क्षणे सखि ! ।
यथा सन्मोहनो मंत्रः शुद्धां बुद्धिं प्रयच्छति ॥१५॥
कृष्णेनापि स्वधैर्य्येण धारितो हृदयान्तरे ।
रागोद्रेकस्तथाप्यस्य स्फुटीभूतो मुखे सखि ॥१६॥
वैवर्ण्यं वक्त्रकमले नेत्रे चञ्चलता भ्रमात् ।
इत्यालक्ष्य मया तस्य रागोद्रेको बिचारितः ॥१७॥
नत्वा भगवतीं कृष्णो सुबलेन समं तदा ।
संप्राप्तो वैतसी कुंजे रागेणाक्रान्तमानसः ॥१८॥
एकान्ते सुबलं प्राह नव्यस्नेहवशं गतः ।
अज्ञातवैभवस्तस्य क्षोभव्याकुलमानसः ॥१६॥

कृष्णः--वर्णद्वन्द्वं कथं बृन्दा गीतं मत्कर्णनन्दकम् ।
यस्य श्रवणमात्रेण नीतः कामप्यहं दशाम् ॥२०॥
यस्मादहं स्वयं ज्ञातुमशक्तोऽथ करोमि किम् ।
हृदये क्षोभनिग्रहान् वर्णयामि कथं कथम् ॥२१॥
चित्रं यस्याद्भुतं नाम वहत्येवं महागुणम् ।
तन्नामा कीदृशी सा स्यादिति क्लाम्यति मन्मतिः ।२२।
वक्तुं वाञ्छामि त्वां सर्वमपि बक्तुं न शक्यते ।
आश्चर्य्यं चास्य मोहस्य किं बदामि कुतूहलम् ॥२३॥
त्वं मे वयस्यः प्रेष्ठश्च त्वत्तः किं गोपयाम्यहं ।
किमस्मिन् साधनं कार्य्यं कथयस्व यथा मतिं ॥२४॥

सुबलः--प्रीतिः किमतुला प्रेष्ठ जाता तन्नाममात्रतः ।
न दृष्टा न च संस्पृष्टा तवेदं चित्रमस्ति मे ॥१२५॥

किमन्याश्च विशोर्य्योऽपि न सन्ति ब्रजमण्डले ।
कस्मात्तस्यामलं रागं वहस्यम्बुजलोचन ! ।।२६।।

कृष्ण:--तस्या: सौन्दर्य्यमाधुर्य्ये नाहं वक्तुं क्षम: सखे ।
नाममात्रेण तस्या यत्प्राप्तोऽस्म्येतादृशीं दशाम् ।।२७।।

अतो मे निश्चितं ज्ञातं तत्समा नास्ति सुन्दरी ।
ब्रजे वाथ जगत्यस्मिन् किमन्यद्वर्णयामि ते ।।२८।।

सुवल:—सत्यं वदसि प्रेष्ठ त्वं तस्या रूपमपूर्वकम् ।
विज्ञायते यदधुना श्रीदाम्नो रूपसौष्ठवात् ।।२६।।

वृन्दा—सुवलेनेति तत्तस्या रूपं संदर्शितं हरि: ।
श्रीदाम्नो रूपनिर्देशात् द्विगुणाभूच्च तद्व्यथा ।।३०।।

कृष्ण:—क्षिप्रं गच्छ सखे तत्र यत्रास्ते केलितत्पर: ।
श्रीदामा तत्समानीय मां विलोकय तन्मुखम् ।।३१।।

वृन्दा—सुवलोऽथ प्रियाज्ञप्त: शीघ्रं तं नेतुमगमत् ।
स विक्रीडन् गिरे: शृंगे सखिभि: सह यत्र हि ।।३२।।
चटुलोऽथ स्वर्णयूथ्या मालो हस्ते विशस्तात: ।
यत्र वला: गति गोविन्दो राधारूपविमोहित: ।।३३।।
मालां विलोक्य गोपाल: प्रियाया: समवर्णिनीं ।
तां वर्णयति रागात्तु तत्समर्पितचेतन: ।।३४।।

कृष्ण:--स्वर्णयूथीलता किं वै तमालं स्नेहविह्वलम् ।
परिरब्धुं समायाति न शंके किञ्चिदन्यथा ।।३५।।

वृन्दा--इति कृष्णस्य हृद्देशे तां मालां चटुलस्तदा ।
समर्पयेद्यथा प्रेम्णा वर्णिता हरिणा सखि ! ।।३६।।
आलिंग्य चटुलं कृष्णो मालां च निजपाणिना ।
स्पृष्ट्वा स्म मुदमाप्नोति प्रेष्ठाया वर्णसूचिकां ।।३७।।
चटुलस्तस्य कृष्णस्य चेष्टामालोक्य भीतवत् ।
पृच्छति स्माथ तं मन्दं स्नेहसंसक्तमानस: ।।३८।।



चटुल:--कस्माद्यदद्य त्वं प्रेष्ठ बिमनस्कश्च दृश्यसे ।
तद्वदस्व यथा नाथ बृत्तान्तं किञ्चिदद्भुतम् ।।१३६।।

न युक्तं गोपितुं नाथ मां भक्तं बक्तुमर्हसि ।
यदिमां तद्दशां दृष्ट्वा मनो मे परिताम्यति ।।४०।।

कृष्ण:—केतकी कौतुके लुब्ध: किञ्चिद्विभ्रमसंयुत: ।
दृष्टोऽहं यत् त्वया मित्र न चान्योऽस्ति विपर्य्यय: ।४१।
केतकी स्वर्णबर्णा या निजरूपेण हे सखे ! ।
तया संमोहितोऽहं यदन्यत्किं परिशंकसे ।।४२।।

चटुल:—कया कनककेतक्या ब्रजन्त्या निजविभ्रमै: ।
गृहीतं ते मन: प्रेष्ठ कृपया तद्यथा वद ।।४३।।

बृन्दा—चटुलं ज्ञातचेष्टं तं स्मित्वा प्राह हरिस्तदा ।
राधाया: प्रेमबृत्तान्तं यथा तेन प्रलक्षितम् ।।४४।।

बिदितं तन्त्वया प्रेष्ठ प्रसंगादतिदुर्ल्लभम ।
राधेति वर्णयुमं यल्लुंपते मे मतिं पुरीम् ।।४५।।
कश्चैतस्य भयोत्पत्तौ शरण्यश्चाभयप्रद: ।
तमहं तरसा साद्य तरामि भयसागरम ।।४६।।

चटुल:--धैर्य्यमालम्ब भो नाथ ! करिष्ये यत्नसाधनम् ।
न सोऽतिदुर्ल्लभो भाबो ब्रजोऽपि त्वत्परो यत: ।।४७।।

नन्दिनी-भवत्या प्रेषिता बीरा राधया स्नेहबृद्धये ।
तया तस्मिन् कथं देवि ! प्रीतिरुत्पादिता हरौ ।।४८।।

बृन्दा—बीरा तस्यां राधिकायां संजाता संगबर्त्तिनी ।
तस्यां धृत्वा सखीभावं कृष्णसंगमेन त्वरा ।।४६।।
एकदा राधिका भद्रे सखीभ्यां सूर्य्यमन्दिरे ।
पूजनार्थं प्रीतियुक्ता चलिताभ्युदिते रबौ ।।५०।।
किं बर्णयाम्यहं तस्या: सौष्ठवं शृणु नन्दिनि ।
तथापि वच्मि सौन्दर्य्या बर्णने रसना बृथा ।।५१।।

विकशद्रक्तपद्मेन निन्दंती कमलाकरम् ।
भृंगावलिं निरूद्धां वा बिभ्रती कचसञ्चयाम् ॥५२॥
चिल्लिकोदण्डदर्पेण जयंती कुसुमायुधम् ।
किञ्चिच्च चलनेत्राभ्यां लोभयन्ती मृगात्मजान् ॥५३॥
तिलपुष्पसमानां च नासिकां चलमौक्तिकाम् ।
पक्वविम्बाधरौष्ठौ सा बिभ्रती मृदुलस्मिता ॥५४॥
बिडम्बयन्ती दशनै र्दाड़िमीं कवि सन्मुखीम् ।
मधूककुसुमाकारे कपोले बिभ्रती पुनः ॥५५॥
कपोतं कंठशोभाभिर्निंदंती चैव विभ्रती ।
लसन्मृणालदोर्युग्मं वलयांगदभूषितम् ॥५६॥
वहंती पट्ट पुष्पं च शुभयो र्मणिवन्धयोः ।
अंगुल्यःरत्नरचितमुद्रिकाभिरलंकृताः ॥५७॥
वहंती हृदये हारं मुक्तारत्नसुगुम्फितम् ।
वक्षोजौ श्रीफलाकारौ गूढ़ौ पट्टाम्वरान्तरे ॥५८॥
नाभिं निम्नं कृशं मध्यं वहंती रत्नमेखलाम् ।
नितम्बिनी सुजघनारम्भोरुयुगलांचिता ॥५९॥
अवलम्ब्य सखीहस्तं व्रजंती कलहंसबत् ।
नीलाम्वरधरा तन्वी चरणे चलनूपुरा ॥६०॥
स्मेरापांगविनिर्मोक्षैर्द्योतयन्ती वनान्तरम् ।
तप्तकाञ्चनगौरांगी कैशोरोदयदीपिता ॥६१॥
क्वचिच्चिनोति कुसुमं त्रोटयंती कचित्फलम् ।
क्वचिद्गुञ्जां प्रगृन्हाति क्वचिच्च नवपल्लवान् ॥६२॥
क्वचित्पुष्पलतालास्ये भृंगीगीतं शृणोति सा ।
कोकिलानां ध्वनिं श्रुत्वा रसालेषु प्रधावति ॥६३॥
भर्तुः प्रणयरुष्टानां मयूरीणां च वीक्ष्य सा ।
नदर्थे नर्तनं तेषां गूढ़ं प्राप्ता हसत्यपि ॥६४॥



अनुगामिनोऽथ यासां वै पतयो लुब्धमानसाः ।
तासां मृगीणां लावण्यं दृष्टा क्षुभ्यति किंचन ॥६५॥
प्रक्षेपणादिक्रीड़ाभिः फलपुष्पैः सुकौतुकात् ।
आक्रीड़ति निजालीभिः परां मुदमुपैति च ॥६६॥
क्वचिच्च ललितामूर्द्धिन स्तवकं विनिवेश्य सा ।
तच्छोभां सहसालोक्य हसत्यपि विलासिनी ॥६७॥
विशाखायाः क्वचित्कर्णौ कृत्वा कुसुमभूषितौ ।
आत्मनश्च नखादर्शे दर्शयित्बा च तं छविम ॥६८॥
क्वचिद्गुम्फति गुञ्जानां मालामतिमनोरमाम् ।
क्वचिच्च माधवीहारं नवोढ़ा केलितत्परा ॥६९॥
तत आगत्य कालिन्द्यां स्नानं तत्र करोति सा ।
यत्र नीपो वस्त्रहारी क्रीडापीठो हरेः सखि ॥७०॥
यमुनायां निजालीभिः सु क्रीडाकौतुकान्विता ।
सेचनैश्च जलैः प्रेम्णा राधा मोदं व्यवर्द्धत ॥७१॥
यमुनाकेलिसंलुब्धा न न्यवर्त्तत काचन ।
बीराथ तत्र संप्राप्ता पूजोपस्करसंयुता ॥७२॥
अलं जलबिहारेण शीघ्रं निर्गम्यतामितः ।
नात्र स्थेयं च युष्माभिः सूर्य्यं पूजय राधिके ॥७३॥
ललिता–बीरे किमतिभीतेव पश्यसि त्वं समन्ततः ।
प्रलपस्यद्य नितरां किञ्चिदस्त्यत्र कारणं ॥७४॥
बीरा--कथं न मे भयोत्पत्ति र्नत्यांगी यत्र राधिका ।
अस्मिन्स्थले च ललिता स्थिता वाप्यकुतो भया ॥७५॥
कदम्बो यदसौ भद्रे क्रीड़ापीठः स तस्य वै ।
भूपतेः साम्प्रतं बात्र कदाचिद्वा गमिष्यति ॥७६॥
ललिता–बीरे कस्यास्ति भूपस्य पीठोऽयं परमाद्भुतः ।
यत्सत्पुष्पबितानाद्यैः परितः परिशोभितः ॥७७॥

वीरा—किं मां पृच्छसि तं मुग्धे यस्येदं रमणस्थलं ।
दुर्वारः सोऽतिवीर्य्यो हि युवतीकोटिलम्पटः ॥१७८॥
निजसौन्दर्य्यमाधुर्य्यमोहितो मकरध्वजः ।
निर्जितो येन सहसा किमन्यद्वर्णयामि ते ॥७६॥

वृन्दावनेश्वरः श्रीमान् वन्योपस्करभूषितः ।
मम दृष्टिचरस्तस्माज्जानामि च तदागमं ॥८०॥

वृन्दा—वीरावचनमाकर्ण्य राधिका चकितेक्षणा ।
किञ्चित्त्रासेन संयुक्ता प्राह तां सा सविस्मयम् ॥८१॥

राधा—स को वनेश्वरो वीरे किं नामास्य च मां वद ।
विज्ञातवैभवा त्वं वै श्रोतुकामास्म्यहं यतः ॥८२॥
किं पृच्छसि राधे त्वं हि तन्नामातिमनोहरम ।
यदेवं वा तव रुचिः शृणु तत्कथयाम्यहम् ॥८३॥

नारीगणमनोहारी बिहारी केलिलम्पटः ।
धेनुवृन्दानुसारी स कृष्णस्त्रैलोक्यमोहनः ॥८४॥
तस्मात्तूर्णं त्वर रवेः पूजने खञ्जनेक्षणे ।
उद्गच्छ कार्त्तिदा माता वोदयते तव पद्धतिम् ॥८५॥

वृन्दा—इति राधा कृष्णनाम निशम्य परमाद्भुतम् ।
क्षोभिता च क्षणं तूष्णामभवद्विस्मिता तदा ॥८६॥

ततश्च लब्धसंज्ञा सा धैर्य्यमालम्ब्य तत्क्षणे ।
हसंतीव तदा वीरां प्राहेङ्गितमगोपयत् ॥८७॥
किं नामेति च लोभेण वारं वारं प्रजल्पितं ।
मया नाकर्णितं वीरे पुनस्तत्परिभण्यताम् ॥८८॥

राधा—लग्नपद्मास्मि यन्मया ज्ञातं शीतलवायुना ।
पश्यंतीनां च युस्माकं घूर्णयामि मुहुर्मुहुः ॥८६॥
मार्गस्यातिक्रमाद्धाथ जाताहं च श्रमाकुला ।
यतोऽस्मिन् निजदेहे तु शैथिल्यं धारयामि वै ॥१६०॥



कृतस्नानाप्यहं बीरे तथापि श्रमविन्दवः ।
उत्पद्यन्ते मम मुखे किमेतत्परमाद्भुतम ॥१६१॥
गतश्रमाप्यहं स्वासैः संपूरितहृदाकुला ।
नो जानामि निदानं वै विपरीतस्य दर्शने ॥१६२॥

बृन्दा—एवं विलक्ष्य तच्चेष्टां कृष्णे रागांकुरोदिताम् ।
वीरा तामवदन् किञ्चिद्धसंती हासयंत्यपि ॥१६३॥

वीरा—कौतूहलविखिन्नांगि पृच्छसि सलोभं किं नु ।
अलं हि तत्प्रसंगेन दुर्ज्ञेयः स कुयोगिनाम ॥१६४॥

बृन्दा—ततः कष्टात्समुत्थाय वेतसीलतिकालये ।
नातिदूरेऽथ संप्राप्ता निजालीभिः समावृता ॥१६५॥

यथा वायुः स्ववेगेन क्षोभयत्यमलं ह्रदम् ।
हृत्तडागं तथा तस्याः कृष्णनाम्नैव लोलितः ॥१६६॥
तस्यास्तस्मिन् हृत्तड़ागे नानारूपान् समुत्थितान् ।
न वेद तत्तरंगान्सा स्नेहस्याज्ञातवैभवा ॥१६७॥

कदाचिल्ललितावक्त्रं वीक्षयंती किल वांछति ।
तत्र किमपि यत्पृष्ठा न किञ्चिदिति जल्पति ॥१६८॥
स्वासानिलो नोच्छलितहृन्सरोजस्य शांतये ।
बिनिगृह्य सखीहस्तं पुनस्त्यजति तत्क्षणम ॥१६६॥

स्पृहयत्यपि किं वीरा तस्य नामाक्षरामृतम् ।
पाययिष्यति मां सा तु परितापेन तापिताम ॥२००॥
अहो किं मधुरं वर्णद्वन्द्वं कर्णरसायनम् ।
यतो ममास्य श्रवणे तृष्णापि न निवर्त्तते ॥२०१॥

एवं चिन्तयंती वाला कृष्णेन हृतमानसा ।
गोपयंती स्वकां काष्ठां तूष्णीभावाश्रिताभवत ॥२०२॥
अकस्मादेव काले तु मोहनो मुरलीध्वनिः ।
हृदये वाविशत्तस्याः कर्णमार्गेण नन्दिनि ! ॥२०३॥

तेन संचोरितं तस्याश्चेतो यन्कृष्णमोहितम् ।
ददाह नये तन्नीत्वा निजचौर्य्यबलेन वै ।।२०४।।

राधा—चोरितं केन मच्चितं शब्दरूपेण साम्प्रतम् ।
गृह्यतामिति जल्पंती मूर्च्छिता चापतद्भुवि ।।५।।

वृन्दा—सख्यौ परस्परं तस्याश्चेष्टां दृष्ट्वा प्रजल्पतः ।
किमिदं यदियं तन्वी नितरां परिताम्यति ।।६।।

सख्यः—यदारभ्य कृष्णनाम श्रुतं बीरामुखोदितम् ।
तदारभ्य भवत्येषा शंके विक्षिप्तमानसा ।।७।।

एवमुक्ते सखीभिस्तु ललिता स्नेहकातरा ।
अपृच्छद्दयितां राधां ज्ञातं तस्या मनोगतम् ।।८।।

ललिता—कस्मादकारण्ये त्वं राधे प्रलपस्यपि चित्रधा ।
स्वसखीं मां स्ववृत्तान्तं वक्तुमर्हसि सुन्दरि ! ।।९।।
यदहं नितरां राधे त्वत्प्रलापं बिलोक्य वै ।
स्वयं धर्तुं न शक्नोमि कातर्य्येण समाकुला ।।१०।।

वृन्दा—ततोऽवधार्य्य धैर्य्यं सा वंशीचलितमानसा ।
नेत्रे उद्घाट्य कृच्छ्रेण प्राह तां सा स्वकां गतिम् ।।११।।

राधा—नो जानामि किमेषोऽस्ति रावो रामामनोहरः ।
येनाहं ललिते सद्यः कृता स्ववशंवर्त्तिनी ।।१२।।
मया तु न श्रुतो जातु नादोऽयमतिमादकः ।
यज्जानामि जनिं चास्य तत्तु त्वं प्रबदस्व मां ।।१३।।
जनयत्यन्यथां बुद्धिं सत्कुलाचारखण्डिनी ।
अप्राप्तकामनां रामां यः कामवशमानयेत् ।।१४।।

ललिता—स्निग्धमित्रघटाभिर्यो युक्तो वंशीबटे विभुः ।
तस्य श्यामाम्बुदस्यालि नादोऽयं मुरलीमुखात् ।।१५।।
कथमुद्रितकर्णा त्वं न जाता सखि तत्क्षणं ।
अज्ञातवैभवे यस्माच्छ्रुतो दुर्निनदस्त्वया ।।२१६।।



यया व्रजकिशोर्य्योऽपि चालिताः कुलशीलतः ।
तस्या वंश्याः कथं मुग्धे त्वया कर्णं कृतो रवः ।।२१७।।
पतिव्रताः पतिपराः सेवन्त्योऽपि पतिं स्वकं ।
यद्वंशीनिनदं श्रुत्वा धावंति गतसंज्ञकाः ।।१७।।
कुललज्जां तथा धैर्य्यं धर्म्मं वेदप्रनोदितम् ।
नाशयत्याशु या वंशी तन्नादो बिश्वमोहनः ।।१९।।

राधा—वंशजायाः किमस्या वै मोहनत्वमपूर्वकम् ।
एतन्न संभवत्यत्र किञ्चिद्दुर्ज्ञेयकारणम् ।।२०।।
तद्वर्णयस्व मां कस्य वंशीनादोऽयमद्भुतः ।
यो मां निजपतिं नेतुं त्वरयत्यच्युतोद्यमाम् ।।२१।।

ललिता—अये शुद्धे स कृष्णस्य मुखसीधुमदोन्मदः ।
वशीकरोति यो नारीर्वेणुनादोऽतिमोहनः ।।२२।।

वृन्दा—निश्चिनोति हि सा राधा ललितागदितेन यत् ।
न स्यादन्यत्र मत्प्रीतिस्तस्यैव मुरलीरवः ।।२२३।।

इतिश्रीकृष्णकौतुके राधाकृष्णयो
रागोदयो नाम द्वितीयः
सर्गः ।।२।।

## ❀ तृतीयसर्ग ❀

वृन्दा—अथ कृष्णोऽपि नितरां राधास्नेहेन नन्दिनि !
नीतो व्याकुलतां तस्माद्भ्रमति स्म बनान्तरे ।।१।।
श्रीदामानं समादाय सुबलोऽगात्तदा सखि! ।
अदर्शयन्स कृष्णाय तस्य रूपमलौकिकम् ।।२।।
तद्दृष्ट्वा सहसोत्थाय हरिरालिंग्य भूरिशः ।
अपृच्छन्कोमलालापैस्तस्मिन्प्रीतिं बहन्नति ।।३।।

परिधापयति प्रीत्या मालां स्म निजकंठतः ।
स्नेहेन तस्य वदनं पश्यन्नपि न तृप्यति ॥४॥
तस्मिन्काले तु रामोऽपि धेनुसंघेन संयुतः ।
प्राप्तो पाययितुं तत्र पानीयं सुरभीकुलम् ॥५॥
श्रीदामा तस्य संगेन गतस्तद् यमुनातटे ।
राधायाः स्नेह संक्लृप्तो वृत्तान्तरमगाद् हरिः ॥६॥
श्रीदाममुखमालोक्य राधाया रूपकौशलम् ।
वितर्कितं तदा कृष्णः संव्यवारयत प्रभुः ॥७॥
किमेषा चम्पकलता सोल्लासनवपल्लवा ।
तमालं पतितं पादे स्पृष्ट्वा वा नन्दयिष्यति ॥८॥
किमियं माधवी मुग्धा प्रलुब्धं मधुसूदनं ।
मधुनाकृष्टहृदयं मोदयिष्यति वा कदा ॥९॥
इयं नवकुरंगीव कुरंगं क्षोभिताशयम् ।
निजनेत्रविलासेन स्वीकारं किं करिष्यति ॥१०॥
किमियं चन्द्रिका जातु चकोरं स्थगितेक्षणम् ।
पाययित्वा स्वमाधुर्यं नितरां तर्पयिष्यति ॥११॥
सौदामिनी वा किमियं स्नेहार्द्रं मुदिरं कदा ।
निजलालित्यसाराणां रञ्जयिष्यति कौशलैः ॥१२॥
एवं विचारयन्दीर्घनिःश्वासैस्तु परिप्लुतः ।
गृहीतचेताः किञ्चिद्वै वृक्षमालम्ब्य संस्थितः ॥१३॥
तस्मिन्काले वने प्रेम्णा रागिण्या भोज्यमुत्तमं ।
यथापूर्वं समानीतं समर्पयति सा स्म तत् ॥१४॥
राधायाः स्नेहमास्वाद्य पूर्णस्वान्तो मुरान्तकः ।
भोज्यं किं सुखदं तस्मै चतुर्विधं विनिर्म्मितम् ॥१५॥
येन पीतं कदाचिद्वा प्रेमामृतमपूर्वकम् ।
संतृप्तस्तद्रसावेशात् किं पानं किं च भोजनम् ॥१६॥



किं देहे वाथ गेहेषु स्नेहो भवति तस्य वै ।
बद्धो यः स्नेहपाशेन तत्परत्वेन विह्वलः ॥१७॥
कृष्णस्त्यक्त्वा गवां वृन्दं सुहृद्वृन्दं च नन्दिनि !
राधास्नेहविसिक्तश्च विह्वलोऽथाभ्रमद्वने ॥१८॥
तदा तां रागिणीं कृष्णो धैर्य्यमालम्ब्य सत्वरं ।
प्राह नूनं निजदशां संगोप्यालक्षितस्तथा ॥१९॥
कृष्णः—सखि गच्छ न चाश्नामि यदानीतं त्वयानघे !
बुभुक्षा नाद्य मे तस्माद्बलदेवाय चार्पय ।२०॥
स तु केलिकदम्बे वै सुहृद्संदोहसंवृतः ।
अस्ति तत्र च तूर्णं त्वं तस्मै भोज्यं समर्पय ॥२१॥
रागिणी-अप्यद्य न कृतं नाथ त्वया प्रातस्तु भोजनम् ।
इदानीं त्यज्यते कस्मात् किञ्चिदत्र कुतूहलम् ॥२२॥
क्षुधाम्लापितवक्त्रो हि विमनस्कश्च दृश्यते ।
अपि त्यक्तस्त्वया नाथ गोकदम्बोऽति वत्सलः ॥२३॥
स्खलितापीडबंधोऽसि स्रस्तपीताम्बरोऽन्यतः ।
वेणुं चापि न जानासि कैषा चित्रा गतिस्तव ॥२४॥
क्षणं स्वेदः क्षणं कम्पः क्षणं च पुलकोद्गमः ।
क्षणमश्रुजलं कीर्णं किमेषा दारुणा गतिः ॥२५॥
कलिकां चम्पके दृष्ट्वाप्यलीकात्परिशोचति ।
किं ते हृदि स्थितो भावो वद सुन्दर मां प्रति ॥२६॥
कृष्णः-मिथ्याशंकिनि याहि त्वं भोज्यं रामाय चार्पय ।
अहं गोचारणे खेदात्खिन्नोऽस्म्यत्रैव संस्थितः ॥२७॥
वृन्दा—संलक्ष्य तस्य हृद्वृत्तिं रागिणीति व्यचारयत ।
कस्यामस्यायमतुलो रागः संवर्द्धितः खलु ॥२८॥
तथापि प्रश्नमेतं तु करिष्ये सदने रहः ।
अस्य कुर्य्यामथादेशमिति निश्चित्य प्राह सा ॥२९॥

राागिणी-क्रीड़ानीपस्य मार्गं तु नो जानामि बनेश्वर ।
आज्ञापयस्व सुवलं यो मां दर्शयते स्मृतिम् ॥३०॥
कृष्ण:—नीपस्य गच्छ सुबल दर्शयित्बा स्मृतिं वत ।
रागिणीं शुद्धहृदयां शीघ्रमागम्यतामितः ॥३१॥
बृन्दा—रागिणी त्वं हि कृष्णस्य हृन्क्षोभं तमपूर्वकम् ।
पृच्छंती सुवलं प्राप्ताख्यातं केलिकदम्बकम् ॥३२॥

रागिणी-वयस्य कुत्रैतं भावं कस्मिन्वहति मोहनः ।
कृपया वद मां यस्माज्जाताहं खिन्नमानसा ॥३३॥
सुवलः—रबत्तोऽपि गोपितो येन स भावोस्त्यनिदुर्लभः ।
न बक्तव्यं च कृष्णाय तन्मयोदीर्य्यते सखि ॥३४॥
एष वै वार्षभानव्या नाम श्रुत्बा बिमोहितः ।
बृन्दया नोदितं तस्य सिद्धो यत्नो बिधीयताम् ॥३५॥

बृन्दा—रागिणी वलदेवं तत् भोजयित्बा यदाह तम् ।
पुनरागाद्व्रजं साध्वी कृष्णखेदेन बिह्वला ॥३६॥
सुवलः कृष्णपार्श्वेऽथ प्राप्तस्तं यमुनाह्रदम् ।
नीत्वा पद्मबनं यत्र तच्छोभां समदर्शयत् ॥३७॥

भृंगानां पद्मिनीनां च कौतुके लुब्धमानसः ।
कृष्णोऽपि क्षणमेकं तु तत्र बिश्रमितः सखि ! ॥३८॥
अथ राधापि रागेण व्याकुलां गतिमापिता ।
स्वसखीनां समक्षं सा लग्नपद्मा भवत्तदा ॥३९॥

अकस्माच्च तदानीं तु कृष्णोऽदर्शि तयानघे ।
काममोहदशायां वै स्वप्ने दृष्टो यथाक्षिगः ॥४०॥
नेत्रमुद्घाट्य सहसा हस्तलब्धे यथा धने ।
बिनष्टे यद्धवेत्तद्वद्विह्वला व्यलपत्तदा ॥४१॥
हा क्वासौ मे मनोहारी दर्शयित्बातिमोहनम् ।
रूपं यद्दुर्लभं लोके गतः किं तत् करोम्यहम् ॥४१॥



स्निग्धनीलाम्बुदश्यामः श्यामकुञ्चितकुन्तलः ।
लसद्बर्हिदलापीडः स्फुरन्मकरकुण्डलः ॥४२॥
चन्दनेनानुलिप्तांगो मण्डितो बनमालया ।
स्वर्णवर्णोल्लसच्चारुदुकूलो लोकमोहनः ॥४३॥
वंश्यालिंगितहस्ताब्जो मणिभूषणभूषितः ।
स्मेरापांगबिनिर्मोक्षैर्मोहयन्नपि मोहिताम् ॥४४॥

सहसा मां समुत्थाप्य मीलिताक्षीं बिमूर्च्छिताम् ।
स कोऽपि दुरभिप्रायः पाणिना मार्ज्जयन्मुखम् ॥४६॥
यद्वुद्गच्छेति नितरां जल्पति दुर्बिहारबित ।
मुहुस्त्वरयते कुंजे मां हठेन हठी वलात ॥४७॥
वृन्दा--एवं वदन्ती क्रन्दंती विलपंती यथा तथा ।
रुरुद सव्यथं यस्माद्गोविन्दाकृष्टमानसा ॥४८॥

ललिता-किं स्वप्नकौतुके मुग्धे ! प्रलुब्धास्यपि मुह्यसि ।
यदेषः चंचलो जातु सदा नैकत्र तिष्ठति ॥४९॥
किं बृथा विलपस्यालि किं विषीदसि दुःखिता ।
मेघसंघ इव प्रातः स्वप्ने दृष्टं कुतूहलम् ॥५०॥

राधा—किमसौ स्वप्नदृष्टो यो बलाच्चेलांचलं मम ।
विकर्षति न जानेऽहं किं कर्त्तुं ललिते यतः ॥५१॥
कोऽयं धृष्टोऽतिबीर्य्यो यो भबतीनां पुरः सखि !
मां गृहीत्वा यतो गन्तुं कामनायुत ईच्छति ॥५२॥

नहि नेति वदंत्या मे सोऽति दुर्लील आतुरः ।
सखि स्मित्वा चरणयो र्मां कर्षति पतत्यपि ॥५३॥
कोऽसौ शुद्धा मतिः येन धर्ममार्गान्मयाधुना ।
प्रवर्त्तिताऽस्मिन्नधर्मे कुलकन्याबिगर्हिते ॥५४॥

ललिता--अयं चित्रः स्यभावो स्यान्क्षणं योऽस्मिन् वहेद्रतिम् ।
तं न जातु त्यजत्येषः लोहपाषाणयोगबत ॥५५॥

तस्मिन् त्वया कृतः स्नेहो न ज्ञातं तस्य वैभवं ।
इदानीं कलाम्यसि त्वं किं मनो हृत्वा च तस्करे ॥५६॥
मा विषीद त्वया यस्य श्रुतं नाम मनोहरम् ।
अपि वंशीरवो वामो नन्दनन्दन एव सः ॥५७॥

वृन्दा—निशम्येति तया प्रोक्तं सा राधाप्यन्वचिंतयत् ।
मयापि दृष्टं तद्वंशीमण्डितं हस्तपंकजम् ॥५८॥
सा निश्चिन्त्य रतिं कृष्णे गोबिन्दे नन्दनन्दने ।
किञ्चिच्चित्ते समाश्वस्य संगमायान्वतप्यत ॥५९॥

एतस्मिन्नन्तरे कस्मादहं प्राप्ता च तत्र हि ।
ललिता च विशाखा च यत्रासीनाथ राधिका ॥६०॥
मां विलोक्य स्नेहवंत्योऽभिवंद्य च मुहुर्मुहुः ।
किं तोषयामस्त्वां देवि ! वनं सर्वं तत्रैव हि ॥६१॥

मया संतर्कितं तत्र राधास्नेहः समेधितः ।
उदासीनेव ललितामवोचं वचनं तदा ॥६२॥
किमौचिती ते ललिते कीर्त्तिदायाः प्रिया सुता ।
नव्यांगी राधिका यस्मात्त्वया नीता दशामिमाम् ॥६३॥
किं जानाति यदेषा वै मुग्धा चाप्राप्तयोवना ।
दुर्गमाचारमार्गोऽयं त्वया संदर्शितोऽधुना ॥६४॥
त्वया तु सहसा नीत्वा रुद्धा च घनसंकटे ।
निःसारणाय तत्र स्मात्किं यत्नो निश्चितः खलु ॥६५॥
यदेषा खेदसंपन्ना शैथिल्यं वहते परम् ।
प्रम्लानवदना श्वासै मुहुर्नेत्राम्बु वर्षति ॥६६॥
अन्यादृशीमिमामस्या गतिं द्रक्ष्यति चेत्तदा ।
किं वदेन्वत्सला धात्री यया संपालिता किल ॥६७॥
किं वा सा कीर्तिदा माता किं कुर्याद् यदि पश्यति ।
या मनागप्युदासीनामिमां दृष्ट्वाऽतिताम्यति ॥६८॥



ललिता-किं त्रासयसि मां देवि ! नापराध्याम्यहं वत ।
अकस्मादंगदेशेऽस्याः शुद्धे पापविवर्जिते ॥६९॥
नामद्ध तस्तस्य राज्ञो विवेशोऽथाकुतो भयः ।
स्वतेजेसा तेन नूनं सदेशः साधुमानितः ॥७०॥

ततः संघोषिता तस्मिन्वंशी तद्राजशासनम् ।
इन्द्रियाणि मनो बुद्धिः प्रजा तद्देशवासिनी ॥७१॥
तदाज्ञां मूर्ध्नि चाधाय वर्त्तमाना भवत्तदा ।
ततो देवि ! स्वयं राजा सोऽविशद्धृदि मन्दिरे ॥७२॥

जीवो देहाभिमानी यो दृष्ट्वा तं नृपतिं तदा ।
अलौकिकं स्वयं तस्मै स्वदेशं हि समर्पयत् ॥७३॥
वशवर्त्ती स जीवो वै जातस्तत्प्रणयान्वितः ।
त्यक्त्वा ममत्वं यत्तस्मै निवेद्य व्यचरत्ततः ॥७४॥

बलेन तेन राज्ञा वै निर्जिता स्यास्तनुद्युतिः ।
तदादिवृत्तावंगानि व्याकुलान्युपवर्त्तिनां ॥७५॥
बृन्दा--किमपूर्वो दंडमुद्रा त्वया विस्तारिता मयि ।
को राजास्मिन् प्रवेष्टुं यः शक्तो धरणिमण्डले ॥७६॥

देवानामपि दुर्ज्ञेया दुर्दशा यापि शंभुना ।
ब्रह्मापि न समर्थस्तां द्रष्टुं वै शतजन्मना ॥७७॥
कोऽसौ राजा महावीर्यो यस्तस्या हृद्गृहे विशत् ।
तूर्णं तल्ललिते वद परं कौतूहलं मेऽत्र ॥७८॥
ललिता-किं नु पृच्छसि देवि त्वं मामिहाज्ञातवैभवा ।
कोऽप्यन्योऽस्ति भवद्गोष्ठे साध्वीनां धर्मलोकपः ॥७९॥
अजानतीव किं मां वै विडम्बयसि शोभने ।
कोप्यन्योऽस्ति जगत्यस्मिन् रूपवान्गुणवान्बली ॥८०॥

यस्य चारु मुखं वीक्ष्य वृन्दा अप्यचरन्मधु ।
किं चित्रं जंगमानां वै मोहे चक्षुष्मतां पुनः ॥८१॥

स गोविन्दो नृपो देवि ! धेनुवृन्दानुवर्त्त्यपि ।
तेन संक्षोभिता चैषा मृगी लीलाविहारिणा ॥८२॥
मूर्च्छिता च विखिन्नांगी पृष्टैषापि तदा मया ।
राधास्नेहेन संक्लृप्ता तस्या रागपरीक्षया ॥८३॥

किमेतत्साहसं राधे त्वयारब्धं व्रजान्तरे ।
वृषभानुः पिता यां तु रक्षते कोटियत्नतः ॥८४॥
देवार्च्चनमिषेणाथ कथमाचरितं त्वया ।
यद्विधेयं न साध्वीनां कुललज्जाभ्यपोहनम ॥८५॥
ना द्यापि तादृशी राधे तव नेत्रे सुलक्षणे ।
कटाक्षमोक्ष उत्पन्नः कथं स्पृहसि कामिने ॥८६॥
गंभीराकुक्षिकुहरे शेषेऽद्यापि त्वमेव यत् ।
तृणकम्पेऽपि संभीताऽभिसारं कथमिच्छसि ॥८७॥
क्रीडत्यलिंद विशदे पितुर्गेहे हि साम्प्रतम् ।
वयस्याभिः कथं सम्यक् त्वयाभ्यस्तमिदं वद ॥८८॥

रागोद्विग्नमना राधा किंचिदुत्तरभाषणे ।
न समर्था विशाखा तत्प्रेरिता भाषितुं तदा ॥८९॥

विशाखा—विज्ञापयति राधा त्वां शृणु देवि ! यथाविधि ।
नापराध्यामि मुग्धाहं वने प्राप्ताऽपि गह्वरे ॥९०॥
स्मित्वा विलोक्य मां दूरात्पुनरायति मत्पुरः ।
अंगुल्यग्रं प्रगृह्णाति क्रन्दन्त्या अपि नोज्झति ॥९१॥
प्रयाहीति प्रजल्पंती मां स्प्रष्टुमुपसर्पति ।
मालया हंति हृद्देशे कथंचिन्न निवर्त्तते ॥९२॥
तत्र कस्मिन्न मे दोषो भवती यत्प्रकल्पते ।
अबला स वलं किं वै निवारयति विह्वला ॥९३॥

ललिता—एतस्मिन् संकटे प्राप्ते त्वमेव शरणप्रदा ।
उपायं कुरु देवि त्वं यथेषा वै प्रजीवति ॥९४॥



वृन्दा—वीरा गत्वा हरेश्चेष्टामालक्ष्य च यथा तथा ।
ज्ञातभावा निजसखीमानन्दयतुमर्हतु ॥९५॥
प्रसंगात्तच्च राधायाः स्नेहाधिक्यं मधुद्विषि ।
निवेद्य तत्तदाकारमत्रागत्य वदत्वपि ॥९६॥
अहं चापि तथोपायं संयोगाय हि सत्वरा ।
गत्वा करोमि ललिते त्वमाश्वासय राधिकाम् ॥९७॥

तस्मिन्काले तु गंभीरा संप्राप्ता राधिकान्तिकं ।
क्व राधेति मुहुः प्रेम्णा जल्पंती विह्वलेव सा ॥९८॥
विलोक्य तत्र ललितां स्नेहसंरम्भनिर्भरा ।
प्राह कस्मात्त्वया राधा रक्षिता विपिनान्तरे ॥९९॥

मध्याह्नोऽपि जातोऽयं हि यथाप्यकृतभोजना ।
कुतः सा सुकुमारांगी क्षुधाक्षामकलेवरा ॥१००॥

ललिता—आर्य्येऽस्मिन् वेतसीकुंजे शेते वै सखी राधिका ।
प्रबोधय त्वमेवैतां नाहं शक्ता प्रबोधितुम् ॥१०१॥

गंभीरा—शेषे किमत्र वत्से त्वं गह्वरे कुंजसद्मनि ।
अतिकालो हि जातोऽयं बालिके निद्रयाकुले ॥२॥

वृन्दा—गम्भीरालोक्य तच्चेष्टां कातर्य्येण प्रजल्पिनी ।
ललितां प्राह सा क्षिप्रं रक्ताक्षी स्फुरिताधरा ॥३॥

गम्भीरा-राधेयं ललिते कस्मान्मूर्च्छितेव विलक्ष्यते ।
किमेतत्कारणं तत्त्वं कथयस्व यथा कथम् ॥४॥

ललिता-आर्य्ये सूर्य्यात्मजायां तु निमज्य वरिरागता ।
पुनः कदम्बे संप्राप्या च्छायाभिरतिशीतले ॥५॥
तत्र संप्राप्तिमात्रेण गतिरेतादृशी गता ।
नो जाने किमभूच्चित्रं त्वं तु चिन्तय तत्वतः ॥६॥

क्रीडालोभिनि गच्छ त्वं हतास्म्येषा त्वयाद्य यत् ।
तमस्वद्विपिने नित्यं हसंत्या याति निर्भया ॥१०७॥

किं वदिष्यति माता त्वं दृष्ट्वा च गतिमीदृशी ।
चल शीघ्रं गृहे वत्से करिष्ये यत्नसाधनम् ॥१०८॥
वृन्दा—गम्भीरेव सुपुत्रीं तां नीत्वा गृहमगात्ततः ।
कीर्त्तिदा दुःखमापन्ना समालोक्य च तद्दशाम् ॥६॥

ततो बीरा कृष्णपार्श्वे संप्राप्ता यमुनाह्रदे ।
यत्र स्थितः पद्मवने शोभायां लुब्धमानसः ॥१०॥
प्रेम्णाभिवन्द्य सा कृष्णं पश्यंती तस्य लक्षणम् ।
किमेष राधिकायां च रागं वहति किं न वा ॥११॥

कथं वीरे स्वीयवर्गं पुष्टं कर्त्तुमिहागता ।
यदियं पद्मिनी लुब्ध भृंगं स्पष्टुं न बांछति ॥१२॥

वीरा—भृंगोऽयं वहुबल्लीषु रागं वहति भूरिशः ।
इयं स्पष्टुं कथं योग्या शुद्धांगी शतभुग्यत ॥१३॥
कृष्णः—वनचारी प्रसिद्धोऽयं स्वभावं चास्य वेत्सि हि ।
न तथाप्यन्यकुसुमे सतृप्तः पद्मिनी विना ॥१४॥
बीरा—बर्द्धते नितरां लोभोऽनेन सन्दर्शनादपि ।
नैवंविधा पद्मिनी या भ्रमरे वद्धसौहृदा ॥१५॥
कृष्णः—सत्यमुक्तं त्वयैतद्यदेषा वंधेऽस्य लोभिनी ।
न हि वद्धो भवत्येषोऽन्यत्र लोभान्कदाचन ॥१६॥
बीरा—दृश्यतां सौहृदं तस्या यदेनं बहुबल्लभम् ।
समाकुलं च तत्प्रेम्णा या श्वापयति वेश्मनि ॥१७॥
कृष्णः—अनादृतस्तया नूनं विमनस्कोऽयमाकुलः ।
मनो धर्त्तुं न शक्नोति तत्परत्वेन कातरः ॥१८॥
बीरा—संत्यक्तसौहृदो यस्मात्सहस्त्यक्त्वा तदन्तिकम् ।
व्यचरन्स्वेच्छयारण्ये म्लाना तद्विरहेण सा ॥१९॥
एवं च भवता कस्माद्वयस्योन्मादिता मम ।
सुकुमारी तनुलता तस्याश्च म्लापिता त्वया ॥१२०॥



समुल्लसति संप्राप्य त्वद्दृष्टिं मधुवर्षिणीम् ।
न जीवति कथञ्चित्सा त्वद्दृष्ट्या सेचनं बिना ॥१२१॥
चटुलः–मिथ्याजल्पिनिचरि त्वं किं दोषं परिशंकसे ।
यदनेन न दृष्टा सा श्रुता वापि कदाचन ॥२२॥
कथमुन्मादिता मुग्धे त्वन्सखी गृहवर्त्तिनी ।
अयं सदैव विपिने सबयस्यश्चरत्यपि ॥२३॥

नारीबर्गेष्वनाशक्तो न च द्रष्टुमपीच्छति ।
स्वहृद्वृत्त्या चरत्येष चिंतयन्नर्थमात्मनः ॥२४॥
कथमस्मिन् विशुद्धांगे निः कलंके मुधा त्वया ।
दुःकलंकोऽतिदुर्द्धर्षो संवितर्क्य निरूपितः ॥२५॥

वृन्दा—इत्युदासीनपदवीं वीरा संवीक्ष्य कातरा ।
चटुलस्य न विज्ञातो दुर्गेयो वाक्यवक्रिमा ॥२६॥
विचारितं तया तस्मिन्काले तच्छृणु नन्दिनि !
राधानामप्रसंगेन ज्ञास्यतींगितमस्य यत् ॥२७॥

वीरा—कथं तां सुकुमारांगीं स्निग्धां चम्पकबल्लरीम ।
नैवेच्छसि तमालस्त्वं या परिरब्धुमुत्सुका ॥२८॥
दाडिमीपक्तिमरसां त्यक्त्वा कीरोत्तमो हि कः ।
बिल्बमास्वादयत्यद्धा वज्रादपि सुदारुणम् ॥२९॥

किं वा मुग्धे त्वया राधे कितवे त्यक्तसौहृदे ।
अस्मिन्कृतो महास्नेहो योऽस्माकं क्लेशवर्द्धनः ॥३०॥
वृन्दा—इत्युदीर्य्य मुहुर्वीरा रुरोद क्लेशसंकुला ।
अपि दृष्ट्वात्र कृष्णस्य चेष्टितं किञ्चिदुत्सुका ॥३१॥

तन्नाम श्रवणान्सद्यो जातो रोमांकुरो हरेः ।
हसती च तदा बीरा लीलापद्मेन ताड़िता ॥३२॥
कृष्णः—किं रोदिषि बने धूर्त्ते यूनां कुलविमोहिनि ।
न मां मोहयितुं शक्तास्त्वादृश्यो ब्रजयोषितः ॥१३३॥

वृन्दा—लीलाकमलमादाय बीरा पुनरगात्ततः ।
यत्र राधा स्थिता भद्रे विरहाग्निखिन्नमानसा ॥१३४॥
बीरापयाने कृष्णोऽपि तप्यमानो ब्रवीदयम् ।
किं वदिष्यति तामेषा खिन्नांगी स्नेहनिर्भरा ॥३५॥
निवर्त्तयिष्यति स्नेहात्किं प्राणान् हापयिष्यति ।
यन्मयोपेक्षिता सम्यकदुर्वाक्यैः कौशलेन मा ॥३६॥
चिंतामणिः करे प्राप्तो यो लोकेऽत्यन्तदुर्ल्लभः ।
प्रमादेन मया क्षिप्तो गम्भीरे मकरालये ॥३७॥
वारं बारमुदोर्य्यैवं तप्यमानोऽतिविह्वलः ।
हा राधेति क्रन्दयन्स उपतापमगात्क्षणम् ॥३८॥
उत्थापितस्तदा कृष्णः सुवलेनातिविह्वलः ।
स्नेहवाष्पैः पूर्णनेत्रः किमिदं भयमुत्थितं ॥३६॥
उत्तिष्ठोत्तिष्ठ गोबिन्द त्यज निद्रां ब्रजं ब्रज ।
अतिकालो हि जातोऽयं रंभंते धेनुपंक्तयः ॥४०॥
वृन्दा—सुवलस्य वचः श्रुत्वा विमृश्य च मुरान्तकः ।
नेत्रे विमृज्य सहसा अगमद्व्रजमेधिनं ॥४१॥
अत्यादरेण मात्रा वै स्नापितोऽमलवारिणा ।
भोजितो विविधान्नं च न ज्ञातं हृदयेङ्गितम् ॥४२॥
एकान्ते रागिणी कृष्णमप्रच्छन् शनकैस्तदा ।
कस्मिन्बद्धसि नाथ त्वं रागमत्यन्तदुष्करम् ॥४३॥
मत्तो गोपयितुं किं वै युक्तोऽयं वद मोहन !
करोमि सहसैवास्य साधनाय यथा छलम् ॥४४॥
कृष्णः—अयि रागिणि किं त्वत्तो गोपयामि हृदिंगितं ।
राधेति मोहनो मंत्रो मे मोहयति मानसं ॥४५॥
वृन्दा—विभाते सुरभीवृन्दं पुरस्कृत्य मधोरिपुः ।
सुहृन्मण्डलसंश्लिष्टो गतः स विपिने तदा ॥१४६॥



वृषभानो गृहे प्रेम्णा राधाया लक्षितुं गतिं ।
अगमत् रागिणी तत्र संप्राप्ता यत्र कीर्त्तिदा ॥१४७॥
सत्कारं विदधत्तस्याः कीर्त्तिदा कीर्त्तिवर्द्धिनी ।
पप्रच्छ कुशलं प्रेम्णा यशोदाया मुहुर्मुहुः ॥४८॥
तदा च रागिणी प्राह कीर्त्तिदां विनयान्विता ।
कुत्रास्ति राधिका मातस्तन्मुखं द्रष्टुमुत्सहे ॥४६॥
कीर्त्तिदा—किं पृच्छसि त्वं राधा वै रागिणी निग्धमानसे ।
किमप्यद्भुतरूपेण बर्त्तते पुत्रिका मम ॥५०॥
गतेऽह्नि सूर्य्यपूजायां गता सा विपिनान्तरे ।
न जाने किमभूच्चित्रं तस्या वै लक्षणं यतः ॥५१॥
तस्मादद्य मया भद्रे प्रेषिता नार्चने रवेः ।
अस्ति साति विखिन्नांगी गम्भीराया गृहान्तरे ॥५२॥
त्वमप्येतां पश्य तूर्णं किं तस्यास्तु व्यवस्थितम् ।
सर्वज्ञासि यशोदाया यन्नित्यं पार्श्ववर्त्तिनी ॥५३॥
वृन्दा—एवं संप्रेरिता भद्रे ! तया सा रागिणी मुदा ।
संप्राप्ता त्वरितं तत्र राधाया भवनान्तरे ॥५४॥
तया संलक्षितस्तस्याः कृष्णे रागो निरर्गलः ।
साश्चर्य्यं कीर्त्तिदायाः सा पार्श्वे प्राप्ता च तत्क्षणम् ॥५५॥
रागिणी—अविशदे वि ! किं ह्यस्याः शुद्धांगे निःकले यतः ।
सर्वज्ञाऽपि न जानेऽहं केन मोहेन विह्वला ॥५५॥
तस्माद्वृन्दावने देवि ! वृन्दा सर्वार्थकोविदा ।
अस्याश्चेष्टां च तां तूर्णं विनिवेदय सत्वरम् ॥५७॥
अप्यन्तरं न कर्त्तव्यमस्या इष्टस्य सेवने ।
राधां संप्रेषय बनं वृन्दा तां साधयिष्यति ॥५८॥
वृन्दा—रागिण्याः साधु हृद्वृत्तिं ज्ञात्वा कीर्त्तिदया तदा ।
देवालये प्रेषिता सा राधा सर्वसखीवृता ॥१५६॥

अप्याहूय गम्भीरा सा ममान्तिकमयोयत् ।
गच्छ शीघ्रं च तां सर्वं वृत्तातं कथयस्व वै ॥६०॥
रागिणी तां नमस्कृत्य गता सा नन्दवेश्मनि ।
तदा वीरा च राधायाः पार्श्वे प्राप्ता सविस्मयम् ॥६१॥

ललिता—कथं सविस्मयं वीरे प्रत्यागच्छसि साम्प्रतम् ।
त्वमादृता न किं तेन किं वा प्राप्तो न स क्वचित् ॥६२॥

वृन्दा—इत्थं निशम्य सा वीरा वाष्पपूरितलोचना ।
प्राह गद्गदया वाचा प्रपश्यंती सखीमुखम् ॥६३॥

वीरा—कस्मात्त्वं राधिके तस्मिन् रागं वहसि दुर्वहं ।
सोऽतिमानी च गम्भीरो मुक्तरागोऽभिलक्ष्यते ॥६४॥
न श्रृणोति कथञ्चिद्वा यो योषिदितिभाषितम् ।
त्वद्वियोगे च किं स्फूर्ति वर्णयामि कथं पुनः ॥६५॥
रागोऽपि तस्य हृदये दृष्टो धातुमयो मया ।
न तु कस्यां च नार्य्यां वै निश्चितं तद्विचेष्टितम् ॥६६॥

वृन्दा—वाक्यपाटवेन तस्या ललिता लक्षयत्तदा ।
राधा श्रवणमात्रेण मूर्च्छिता चापतद्भुवि ॥६७॥
लब्धसंज्ञां विशाखां सा प्राह कातर्य्यनिर्भरा ।
अज्ञाय सहसा भद्रे वीराया वाक्यवक्रताम् ॥६८॥

राधा—मन्दभाग्या हि मां धिक् यल्लोकवेदान्निवर्त्तिताम् ।
अज्ञात्वा यस्य मार्गस्य वृत्तिं त्वं तु कृतोद्यमा ॥६९॥
नालोचिता मया गुर्वी गुरूणां यत् त्रपार्गला ।
सहसोल्लंघिता तस्मिन् रागः संप्रकटीकृतः ॥७०
त्यक्त्वा हठेन साध्वीनां शुद्धां धर्म्मस्य पद्धतिं ।
प्रवर्त्तिता मया चास्मिन् दुर्मार्गे लोकनिन्दिते ॥७१॥
उपहासश्च लोकानां श्रुतश्चाप्यश्रुतीकृतः ।
किं पुनर्भवतीनां यत्क्लेशः संवर्द्धितो मया ॥७२॥



तत्किं करोमि हा कष्टं यस्य संगसुखाशया ।
अनादृतो मया धर्म्मस्तेनैवोपेक्षितास्म्यहम् ॥७३॥
पतिता निबिडदाहवन्हिकुंडेऽतिभीषणे ।
मा दहत्यंगवल्लीं मे तदद्य सखि यातना ॥७४॥
मनोरथो मां तदपि संम्लापयति यन्महः ।
सकृन्नपीता तद्वंशीश्लिष्टाधरसुधा सखि! ॥७५॥
किं वा तस्यैव वदनं साक्षादालोक्य लोचने ।
मम नो शिशिरीभूते तृष्णा मां बाधते ततः ॥७६॥

वृन्दा—अरुदन्मुक्तकंठा सा कृष्णदर्शनलोभिनी ।
निश्चेष्टा या पतद्भुमौ गतप्राणेव नंदिनि ! ॥ ७७॥
ललिता च विशाखा च विह्वला रुदिता स्म ता ।
वीरेऽत्राहीति किं कुर्म इयमुत्तानितेक्षणा ॥७८॥

वीरा—समाश्वसिहि नालभ्यं त्वद्धृदिस्थं च यत्फलं ।
इति लीलाम्बुजं तस्या नासायां समयोजयत् ॥७९॥
सद्यः सा लब्धसंज्ञा तदभूदुन्मील्यलोचने ।
पश्यंती वदनं तासां सन्नकेठैतदब्रवीत ॥८०॥

राधा—केयं दिव्यौषधीर्वीरे ययाहं गतजीविता ।
लब्धप्राणा कृता सद्य एतच्चित्रं वदस्व माम् ॥८१॥

वीरा—हे मुग्धे तस्य कृष्णस्य पद्ममेतन्वभूस्विनं ।
हृदये स्पृष्टमात्रे यत्परं शैत्यं तनोति वै ॥८२॥

वृन्दा—इति राधा तत्कमलं तल्लब्ध्वा निजमानसे ।
धैर्य्यं धृत्वा पुनस्तस्य संगमं समकांक्षत ॥८३॥
तदा मदन्तिके प्राप्ता गम्भीरा भयविह्वला ।
अभिवंद्य तु मां मन्दमवदन्सा सदीनवत् ॥८४॥

गम्भीरा—न जाने किमभूद्देवि ! राधा शुद्धकलेवरा ।
वने ह्यस्मिन्महाभागे यस्मात्तप्यते मुह्यति ॥८५॥

क्वचिद्रोदिति हसति क्वचिन्खिद्यते सीदति ।
क्वचित्क्रंदति साटोपं क्वचिज्जल्पति विह्वला ॥१८६॥
उद्गच्छति क्वचिन्मोहात्पुनः पतति चावनौ ।
सधावति च दुर्ग्राह्या स्वयं च विनिवर्त्तते ॥८७॥
क्वचिन्नवघनं दृष्ट्वा परिरब्धुं च कांक्षति ।
शिखण्डिकावलिं वीक्ष्य वाष्पं मुञ्चन्ति विह्वला ॥८८॥
एवं सा दुर्दशां प्राप्या धैर्य्यं लुंपति लक्षणैः ।
मादृशीनां ततो देवि !यत्नं कुरु यथासुखम् ॥८९॥
बृन्दा—अवधारितं मया सम्यक् तस्याः संजल्पितं तदा ।
उत्तरं चाददां तस्यै यथायोग्यमपूर्वकम् ॥९०॥
मा शोच त्वं मुधा बृद्धे गम्भीरे गच्छ वेश्मनि ।
वनदेवीं समाहूय साधयिष्येऽथ राधिकाम् ॥९१॥
इत्यहं राधिकां द्रष्टुं गता सूर्य्यालये सखि !
दूराद्दृष्टा मया तत्र खिन्नांगी स्नेहनिर्भरा ॥९२॥
वाष्पपूर्णाञ्जनयुतं वहंती नेत्रयोर्युगम् ।
इन्दीवरद्वयं यद्वज्जलमग्नं बिराजते ॥९३॥
म्लानवक्त्रा तुषारेण यथा स्यात्पद्मिनी हता ।
कृष्णध्याने धृतमतिस्तस्मान् या स्फुरिताधरा ॥९४॥
राधां प्रति मया चोक्तं वाक्यं परमरोचकम् ।
कथं भवेत्त्वादृशीनां स्नेहोऽन्यत्र कदाचन ॥९५॥
गोपेन्द्रनन्दनं त्यक्त्वा यश्च त्रैलोक्यमोहनः ।
सोऽपि त्वद्रूपसंसक्तो भ्रमत्युद्विग्नमानसः ॥९६॥
यथा वासन्तिका राधे बसन्ते हि प्रकाशते ।
नान्यथा प्रस्फुरज्जातु तस्मिन्या बद्धसौहृदा ॥९७॥
रागिण्यापि निजोपायः सर्वः कृष्णाय वर्णितः ।
वनभोजनकलितुं पुनः सा च व्रजं गता ॥१९८॥



चटुलं प्राह कृष्णोऽथ किं कर्त्तव्यं च साम्प्रतम् ।
मज्जमानस्य सलिले युक्तं हस्तावलम्बनम् ॥१९९॥
चटुलः—तदाहमपि तत्पार्श्वे गत्वा राधां सुजल्पनैः ।
आसान्त्वयं च नितरां कृष्णसंगमहेतवे ॥२००॥
लीलापद्मं च तेनाथ नीत्वा बीराथ राधिकाम् ।
आश्वासयिष्यति प्रायस्तस्मान्मा तप सुन्दर ॥१॥
अथवा यदि युक्तं वै माधव्या नवमालिकाम् ।
नीत्वार्पयाम्यहं तस्यै पश्यामि च तदङ्गितम् ॥२॥
कृष्णः—साधु संमन्त्रितं मित्र शीघ्रमुद्गच्छ यद्वयम् ।
माधवीकुसुमं नीत्वा रचयामः सुमालिकाम् ॥२०३॥
बृन्दा—चटुलेन समं कृष्णो माधव्या वै बनान्तके ।
प्राप्तः श्रुतस्तुतः कश्चित्किशोरीवचनध्वनिः ॥२०४॥
कृष्णः—सखे त्वं शृणु निश्चित्य किमयं पिकमोहनः ।
वालानां कण्ठनिनदः किं वा मे मतिविभ्रमः ॥५॥
चटुलः-बृन्दा बीरा च ललिता विशाखा सा च राधिका ।
सर्वा वासन्तिकाकुञ्जे सन्ति किञ्चिद्वदन्ति हि॥६॥
कृष्णः—क्षणं लतान्तरे स्थित्वा वीक्षे राधामुखाम्बुजम् ।
ततश्च प्रकटीभूत्वा करिष्ये कौतुकं महत् ॥७॥
बृन्दा—तदालोक्य हरिस्तत्र वितर्कयति किं विधुः ।
चिरमाशायुतं पूर्णश्चकोरं तपयिष्यति ॥८॥
कृष्णः—किमिदं वक्त्रपद्मं च ज्ञात्वा स्वाधीनषट्पदं ।
उल्लसेत्तंप्रदातुं तं मधुरं मधुभोजनम् ॥९॥
इदं सत्यमियं राधा कृष्णश्चाहं व्यवस्थितः ।
इत्याश्चर्य्यं मन्यमानः क्षणं बिस्मयमागतः ॥१०॥
बृन्दा—ततः सम्मुखमागत्य प्रफुल्लवदनाम्बुजः ।
अवादीत्स तदा वीरां कौतूहलपरायणः ॥२११॥

कृष्णः--लीलापद्मं त्वया कस्माद्धृदरव मां मम हृतम् ।
बीरे त्वान्वेषितुं यत्नाद्विचरामि बने बने ॥१२॥
प्राप्तासि साम्प्रतं कुत्र पलायिष्यति तस्करि ! ।
शीघ्रमानय मत्पद्मं निर्मलं च मनोहरम् ॥१३॥
बीरा--सरस्बती च कल्याणी मिथ्यां जल्पति किं खलु ।
मनोरत्नं च मे सख्या भवता चोरितं यतः ॥१४॥
बृन्दा--ततो राधां स्म ललिता संदर्शयति लोभिनीम् ।
कृष्णस्य वदनाम्भोजं दर्शनीयं सुशोभितम् ॥१५॥
ललिता-किं न पश्यसि मुग्धे त्वं कृष्णस्य मुखपङ्कजं ।
पुष्टं कुरु तथोन्मील्य नेत्रद्वन्द्वमधुब्रतम् ॥१६॥
यस्य सद्दर्शनाल्हादे तप्ता त्वमिह रातपे ।
किं न पश्यसि तच्चन्द्रं कुमुदिन्यागतं स्वयम् ॥१७॥
बृन्दा—नेत्र उद्घाट्य कृष्णस्य विलोक्य मुखपङ्कजम् ।
सात्विकेन ममाकृष्टा साक्षाद्द्रष्टुं न चाशक्नोत् ॥१८
तथापि धैर्य्यमालम्ब्य पीतं तस्य मुखामृतम् ।
नातितर्प्यति सा मुग्धा माधुर्य्यैकरसायनम् ॥१६॥
कृष्णोऽपि लीलाकमलं वीक्ष्य राधाकराम्बुजे ।
पुनराह तदा वीरां स्मयमानमुखाम्बुजः ॥२०॥
कृष्णः—अयि धूर्त्ते यदेतन्मे लीलापद्मं च साम्प्रतम् ।
तव सख्याः करे कामं शोभां वर्द्धयते किं न ॥२१॥
वीरा—कुमुदं कृष्णचन्द्र तत्पद्मवद्भाति निश्चितम् ।
हस्तरागेण मे सख्याः पद्म चन्द्रान्न बुद्ध्यते ॥२२॥
वयस्याया मनोरत्नं त्वया संचोरितं यतः ।
दीयतां साधुवृत्त्या तत्स्वयमाविर्भविष्यति ॥२३॥
बृन्दा--न दृश्यते पुनः कृष्णे चौर्य्यलक्षणमद्भुतम् ।
प्रतीतिर्जायते यस्मात्तत्तद्भावैः परीक्षयत ॥२४॥



ललिता-यदेष साधुवृत्तिर्वै शंभो मूर्द्ध्नि नितं करं ।
सधैर्य्यं च बिना कम्पं धारयत्विति निश्चितम् ॥२५॥
बृन्दा--कृष्णेनांगीकृतं तद्वत्तथा किंचिद्विशंकितम् ।
तल्लक्षणं ममांगेषु सूचयिष्यति धूर्त्तका ॥२६॥
राधा पार्श्वे स कृष्णोऽपि समानीतो बिशाखया ।
अस्याः शिवालयं प्राप्य हस्तं धारय सुन्दर ! ॥२७॥
राधा----हतबुद्धिविशाखे त्वं किं मां हसितुमिच्छति ।
कथयिष्यामि गम्भीरां तव हासस्य कारणम् ॥२८॥
बिशाखा-स्वबित्ततस्करं प्राप्य न परीक्ष्य च तद्गुणम् ।
निर्णयं हि बिना त्याज्यः साधु चौरः कथं सखि ॥२९॥
बृन्दा----इति कृष्णं त्वयरति हस्तस्य स्थापने स्म सा ।
कृष्णोऽनुस्मृत्य च तदा तथाकार्षीत्स कौतुकम् ॥३०॥
इति सर्वाः हि कृष्णस्य हसन्त्यो वीक्ष्य लक्षणम् ।
पृच्छन हस्तालवात् साधु कस्मात्ते कम्पते तनुः ॥३१॥
तस्मिन्काले त्वहं प्राप्ता पूर्णमास्या लतागृहे ।
तद्विनोदाय नितरां स्वयमानन्दिता परम् ॥३२॥
ततस्तत्रैव संप्राप्ता गम्भीरा स्नेहपूरिता ।
क्व राधेति प्रजल्पंती धावंत्यतिजवेन सा ॥३३॥
आगच्छंतीं च गम्भीरां सर्वाः संवीक्ष्य कातराः ।
अभवन् विस्मयं प्राप्ता किमेषा दैवदुर्गति : ॥३४॥
तृषिता हि चिरात्कामं चातकी घनहेतवे ।
तदर्थोल्लसिते मेघे वायुरूपेयमागता ॥३५॥
विलोक्य राधिकां स्वच्छामभिनन्द्य च मां तदा ।
प्रहृष्टमानसा प्राह ललितां मृदुजल्पनैः ॥३६॥
गम्भीरा--धन्यास्म्यहं यतः कामं बृन्दया साधिता खलु ।
स्वस्था स्थिता च मे बत्सा राधेयं प्राणबल्लभा ॥२३७॥

तद्गत्वा कीर्त्तिदां ब्रूयामानन्दं वर्द्धयामि वै ।
साप्यस्याश्च विलापेण खिन्नांगी वर्त्तते यतः ॥२३८॥

बृन्दा—इति दृष्टिं क्षपयन्त्या परितस्तत्र मोहनः ।
दृष्टः प्राह कथं कृष्ण त्वमत्रागतमान्खलु ॥३९॥

गंभीरा-उचितं नैव गोबिन्द वृषभानोः प्रियत्मजा ।
तदन्तिके :सयते यत्त्वयैकान्तेऽन्यतो व्रज ॥४०॥

कृष्णः—माधवो स्नेहदाम्नाहं कष्टः वै समुपागतः ।
साम्प्रतं तच्छबिं त्यक्त्वा कुतो यामि बनान्तरे ॥४१॥

बृन्दा—इति राधां पुरोधाय बक्रदृष्ट्या हरिं तदा ।
वीदयंती चैव गंभीरा अगमन्निजवेश्मनि ॥४२॥

हृतचेतास्तदा कृष्णश्चटुलं प्राह नन्दिनि !
बीदयमाणो राधिकां तां व्रजन्तीं स्नेहसंप्लुताम् ॥४३॥

कृष्णः--निर्बाहिता हि कोकेन निशा विश्लेषरूपिणी ।
संगमे ननु जातेयं गम्भीरा भीषणा निशा ॥४४॥

वयस्यया हि वीरां त्वं बद वै संगमावधिम् ।
अप्याश्वासय मां सद्यस्तावदत्र स्थितोऽस्म्यहं ॥४५॥

बृन्दा—चटुलोऽपीति तां बीरां गत्वां तस्यै न्यवेदयत् ।
हरे र्निगदितं सर्वं सा प्रत्याह हरिप्रियम् ॥४६॥

बीरा--स्वमानन्दय गोविन्दं गच्छ तूर्णं तदन्तिके ।
रात्रौ हि वंशीसंकेतादागमिष्यति राधिका ॥४७॥

बृन्दा----चटुलेनाति तद्वाक्यं निशम्याथ हरेः पुरः ।
बर्णितं कृष्णचन्द्रोऽपि सानन्दो ह्यभवत्तदा ॥४७॥
धेनुबृन्दं पुरस्कृत्य सखिमण्डलमण्डितः ।
समव्रजद्व्रजं कृष्णः प्राविशन्नंदवेश्मनि ॥४९॥

एवं नन्दिनि गोविन्दो राधास्नेहनिरर्गलः ।
संजातो यश्च सर्वेषां रतिं वर्द्धयते पदे ॥२५०॥



य एतद्दुर्ल्लभं भद्रे प्रसंगं श्रद्धयान्वितः ।
धीरः शृणोति तस्मिन वै प्रेमा सद्यो विवर्द्धते ॥२५१॥

इति श्रीकृष्णकौतुके राधाकृष्णयोः संगमो
नाम तृतीयः सर्गः ॥

## ❀ चतुर्थसर्गः ❀

नन्दिनी-श्रुतो देवि ! मया सर्वः प्रसंगो जगदुत्तरः ।
राधिकाकृष्णयो रागः सर्वेषां सुखदायकः ॥१॥
भवतीनां वर्णयामि किमलं तत्र कौशलः ।
यतो बुद्धिप्रभावेन द्वयोः संपादिता रतिः ॥२॥

तत्रापि तद्गुरूणां वै जनयन्मोहमद्भुतं ।
निरर्गला कृता यस्मात्कामलीला भयावहा ॥३॥
किं वर्णयामि राधायाः कृष्णे रागस्य गौरवं ।
तद्वशत्वेन या साध्वी नान्यज्जानाति किंचन ॥४॥

तच्चित्ता यत्तदालापा तद्विचेष्टा तदात्मिका ।
इदानीमपि सा प्रेम्णा दृश्यते निजवेश्मनि ॥५॥
याचे कदाप्यहं देवि ! तस्या दासीषु किंकरी ।
स्यामस्याः यत्पादपांशुं स्प्रष्टुं योग्या भवामि वै ॥६॥

यस्या कृपाविहीनानां गोबिन्दे नन्दनन्दने ।
न तत्संबन्धिनी प्रीतिरपि संभाव्यते क्वचित् ॥७॥

राधिकाकृष्णयोर्देवि ! पादपद्मे मनस्त्वहं ।
बिनियोज्य सदा यस्मादावसाम्यकुतोभयाः ॥८॥

नित्यं द्रक्ष्यामि गोबिन्दं राधासंश्लिष्टदोर्लतं ।
न किंचित्तां बिना देबि ! मम नेत्रस्मृतिं गतं ॥९॥

अपि तस्य व्रजे लीलां श्रोतुमिच्छामि नित्यशः ।
यदृच्छया त्वत्सकाशाच्छ्रुतं परमदुर्ल्लभम् ॥१०॥
सर्वा व्रजकिशोर्य्यो याः कृष्णे रागं वहन्त्यलम् ।
कथं ताः कृष्णचन्द्रे तु संप्राप्ताः स्नेहनिर्भरा ॥११॥

धूर्त्तोऽपि कृष्णचन्द्रेण धीरां साधयितुं यतः ।
प्रेषितः स च किं तस्मै तदुत्तरमवेदयत् ॥१२॥
एतत्कौतूहलं देवि ! श्रोतुमिच्छामि तत्त्वतः ।
तं वर्णय कृपापूर्णे वृत्तान्तं परमाद्भुतम् ॥१३॥

वृन्दा--धन्या नन्दिनि ! प्रेमाढ्ये तव भाग्यं महोदयम् ।
किं वर्णयामि यत्कृष्णे वहस्येतादृशीं मतिम् ॥१४॥
बिना भाग्यबलेनालि व्रजे वासो ह्यविच्युतः ।
कथं प्राप्तस्तथाप्यत्र रागो वान्तरभेदवान् ॥१५॥
शृणु नन्दिनि ! वृत्तान्तं यथा भूतं कुतूहलम् ।
वर्णयामि तथा सर्वं शुश्रूषा सयुतां खलु ॥१६॥

रात्रौ तारागणस्तावद्द्योतमानोऽति शोभति ।
यावत्तारापतिश्चन्द्रो नोदितः स्वप्रकाशवान् ॥१७॥
तावदन्या नदी सर्वा गाम्भीर्य्येणैव दर्पिताः ।
यावत्तासां तुच्छकरो न दृष्टो मकरालयः ॥१८॥
एवं कृष्णोऽपि सर्वासां गोपीनां रूपकौशलैः ।
मोहितोऽभूद्राधिकाया मुखं यावन्न वीक्षितम ॥१९॥

तज्जातरागस्तासां वै स्मरते चेतसात्र कः ।
तथापि प्रणयी कृष्णो न विस्मरति तद्गुणम् ॥२०॥
धीरां निश्चित्य स तदा संप्राप्तः कृष्णपार्श्वके ।
निवेदितं तदुक्तं च संकेतः कौतुकान्वितः ॥२१॥
धूर्त्तः--धीरा तुभ्यं नमस्कृत्य संकेतं वद मत्प्रभो ।
रात्रौ वंशीध्वनिं श्रुत्वा आयास्यामि त्वदंतिकं ॥२२॥



वृन्दा--धूर्त्तस्य बचनं श्रुत्वा कृष्णश्चिंताबशं ययौ ।
कर्त्तव्यं किं मयेदानीं हृदये चिन्तयन्निति ॥२३॥
कृष्णः----विलोभिता कुरंगी सा आकृष्टा वेणुनादतः ।
तदा गच्छंति लोभ्यांगी ललिताद्याभिशिक्षिता ॥२४॥

तत्र गोपकिशोरीणां हृदं दृष्ट्वा सविस्मयम् ।
पुनर्निवर्त्य किं तस्माद्गमिष्यति च वेश्मनि ॥२५॥
नो वादयामि यद्वंशी सापि नायाति वै बने ।
तदा ज्ञास्यति मां मुग्धा त्यक्तस्नेहं तु बिह्वला ॥२६॥

ता किशोर्य्योऽपि नितरां चिरान्मयि धृताशयाः ।
आगमिष्यंति वै तूर्णं निशम्य मुरलीरवम् ॥२७॥
किं करोम्यत्र कुतुकं यस्मात्साप्यतिमुह्यति ।
बिनाश्चर्य्यमस्य जने कं कथमेवं भवेदिति ॥२८॥

इदं मे हृदये भाति साम्प्रतं लोकदुर्ल्लभम ।
रासोत्सवं करिष्यामि नारीमण्डलमण्डितम् ॥२९॥
वहवो यत्र नर्त्तक्यो नायकोप्येकः उत्तमः ।
सर्वा रमयते सोऽयं रास इत्यभिभण्यते ॥३०॥
तत्रापि स्वच्छला तासां करोमीर्ष्याबिवर्जितम् ।
यस्मात्तद्रससंलुब्धा मोहमेष्यन्ति मत्पराः ॥३१॥

एवं कृष्णेण निर्णीतो पूर्वो रासोत्सवस्तदा ।
राधाविनोदाय तथा सर्वासां च सुखाय वै ॥३२॥
क्वचिद्गोदोहनं कृत्वा रागिण्या संमतो हरिः ।
स्वयं रासबिहाराय गतो मानसकुण्डके ॥३३॥
तद्विलोक्य सरोवर्य्यं कुमुदाकरमण्डितम् ।
गुंजारैस्तु द्विरेफाणामापूरितमहोदरम् ॥३४॥

यमुनाया नातिदूरं वायुर्यत्र सुखावहः ।
शरदिन्दुमयूखैर्यंल्लासितं च समन्ततः ॥३५॥

हंसनिह्लादघोषेण घोषितं च मनोहरम् ।
उच्छलन्स्वच्छसलिलं बज्रस्फटिकखडंवत् ॥३६॥
हरिद्दूर्वोपरिक्लृप्तं वप्रं परमशोभितम् ।
कृष्णस्तुष्टमना भद्रे लीलारम्भमचिन्तयत् ॥३७॥

करे निधाय मुरली वादिता मधुरस्वरं ।
यया संचालिताः सर्वाः किशोर्य्यः कृष्णतत्पराः ॥३८॥
नन्दिनी-स्वभावादपि या वंशी मोहयत्यंगनागणम् ।
मोहनत्वं कथं तस्याः संकेते कथितं त्वया ॥३९॥
वृन्दा--स्वयं संमोहिनी सा तु पुनदूर्त्य निरूपिता ।
स्वभावाद्वंशिका सर्पी यथा प्रक्षोभितादिका ॥४०॥

नन्दिनी-विचारितो यदप्येवं हरिणा स महोत्सवः ।
तथा स्त्रियो दुःखभावाद् ह्यसूया रहिताः कथम् ॥४१॥
तत्रैव सर्वास्ता देवि हरौ या बद्धसौहृदाः ।
अन्योन्यनिर्विरोधेन परं कौतूहलं मम ॥४२॥
वृन्दा--ताभिर्वंशीगुणः सम्यक् न ज्ञातस्तत्क्षणे सखि ।
संकेतश्च कृतस्तस्याः कृष्णसंगमहेतवे ॥४३॥
तद्द्वावाकृष्यमाणारताः कृष्णे कृतसमुद्यमाः ।
निरीर्ष्या नितरामासन् वंशीकीलितचेतसः ॥४४॥

राधाद्या गोपवनिता निशम्य मुरलीरवम् ।
निर्गतास्ता गृहात्तूर्णं हरौ स्नेहेन यन्त्रिताः ॥४५॥
तदा राधाप्रयाणे सा ललिता प्राह कौतुकात् ।
तस्या बिलक्ष्य हृद्वृत्तं स्नेहविह्वलमानसा ॥४६॥
ललिता-आरोपितौ त्वया कस्मात्कंकणौ निजकर्णयोः ।
कुण्डले च करे मुग्धे त्वया संस्थापिते कुतः ॥४७॥
कस्तूरिका कथं राधे नेत्रयोः परिकल्पिता ।
कज्जलं कुचयोः कस्माद्रचितं चञ्चलेक्षणे ॥४८॥



उत्तरीयं कथं मुग्धे कटिबन्धे तु निर्म्मितं ।
कटिबन्धे नोत्तरीयं कृतं विभ्रमसंयुते ॥४९॥
अपि पश्यति गंभीरा भीषणा समुपस्थिता ।
उद्यमः क्रियते प्रेम्णा गन्तुं कृष्णान्तिके कथम् ॥५०॥

तीव्रशृंगगवां संघे सत्वरेव प्रधावसि ।
मार्गश्रमात्कथं मुग्धे न बिभेषि वदस्व मे ॥५१॥
त्यक्त्वा गृहस्य द्वारं त्वं निर्गतुं कथमन्यतः ।
इच्छसि स्नेहसंसक्ते ह्येषा गतिरपूर्बिका ॥५२॥
किं नैव पश्यसि गुरून्सभायां च परिस्थिताम् ।
निर्गच्छसि कुतस्तत्र बिभ्रमेण परिप्लुते ॥५३॥

वृन्दा—सर्वा व्रजकिशोर्य्यस्ताः कृष्णे सक्तधियस्तदा ।
चलिताः स्वगृहादेवं रंहसा शृणु नन्दिनि ! ॥५४॥
यथा न वेद कश्चित्तत्काचिद्गोपी समुद्यमम् ।
स्वैः स्वैः शब्लैश्च ताः सर्वा निर्गताः निजसद्मतः ॥५५॥

स्वसखीभिस्ततस्तत्र राधिका स्नेहविह्वला ।
प्राप्ता बिलोक्य गोविन्दं लोभ्यांगं च मुग्धं गता ॥५६॥
ततो व्रजकिशोर्य्यस्ताः संप्राप्ताः कृष्णमोहिताः ।
वीक्ष्यमाणा हरिं प्रेम्णा स्थितास्तत्रैव लोभिताः ॥५७॥

हसन्निव तदा कृष्णस्तासां स्नेहस्य वृद्धये ।
अवदद्विचित्रवाक्ये न वाक्यपाटवकोविदः ॥५८॥
कृष्णः—अहोचित्रं किशोरीणां साहसं परमोद्भटं ।
रात्रौ तमसि कान्तारे या आगच्छन्ति निर्भयाः ॥५९॥
अपि जारसुखार्थाय महती जगदर्गला ।
उल्लंघिता स्वभावेन दुर्गमा योगकुञ्जरैः ॥६०॥
याभिर्न गणितो धर्म्मो निर्मलो वेदनोदितः ।
अपि त्यक्त्वा गुरूणां वै यल्लज्जादुस्त्यजा किल ॥६१॥

किं वर्णयाम्यहं चित्रं स्वैरिणीनां वने निशि ।
संप्राप्तानामहो तस्मान्मति विस्मयते मम ॥६२॥
वृन्दा—इति रूक्षं हरेर्वाक्यं निशम्य ब्रजयोषितः ।
खिन्नांगाः दुःखसंप्राप्ताः सर्वा विस्मयितां गताः ॥६३॥

ललिताद्यास्तदा क्षिप्रं प्राहुस्ता नन्दनन्दनम् ।
किञ्चिद्धैर्य्यमवष्टभ्य यथायोग्यं तदुत्तरम् ॥३४॥
ललिताद्या-सत्यं भवान् जगत्यस्मिन् निर्गुणो लोकविश्रुतः ।
गुणेषु तस्य का वुद्धिः स्वतन्त्रस्याकृतात्मनः ॥६५॥
तदत्रापि प्रमाणं तु जलनिर्मुक्तसौहृदं ।
प्राणं त्यजंती वार्य्यर्थे मत्सी दुःखाय न त्वपां ॥६६॥

अपि दीपे पतंगो यद्देहं दहति तद्वशात् ।
सोऽपि तत्साहसं दृष्ट्वा न क्लाम्यति कदाचन ॥६७॥
तस्मात्स्वयं स्वरूपेण मोहितो ब्रजमण्डलः ।
का नारी त्वन्मुखं दृष्ट्वा कामयेत्स्वपतिं पुनः ॥६८॥

सकृत्त्वन्मूर्त्तिमालोक्य सौन्दर्य्यैकपदं यतः ।
किं धर्म्मो निगमोक्तोऽस्याः परमानन्दमयिता॥६९॥
तत्रापि यद्भवद्वंश्या या बलनैव चालिताः ।
कुललज्जां समीक्षेरन मोहिता नन्दनन्दन ! ॥७०॥

अपि लुम्पति या धैर्य्यं धृष्टानां स्ववलेन यत् ।
किमिमा नाथ मुग्धा वै स्वभावेनैव बिह्वलाः ॥७१॥
यस्मात्सव परित्यज्य लोकं वेदं च दैहिकम् ।
पादारविन्दं शरणं तव प्राप्ताः स्म साम्प्रतम् ॥७२॥
स्वीकारं कुरु गोविन्द प्राप्तानां निजपादयोः ।
त्वयि संवद्धहृदयो नान्यं याचेत कश्चन ॥७३॥
वृन्दा—इति तासां स सद्भावो दृष्टः कृष्णेन नन्दिनि ! ।
स्मित्वा राधां परिष्वज्य सर्वाभ्योऽपि मुदमाददन ।७४।



स्निग्धेक्षणेन तद्धृदं स्वहस्तस्पर्शनादिभिः ।
अकरोत्स्ववशे स्त्रीणां कृष्णो लावण्यमन्दिरं ॥७५॥
बारम्बारं प्रियावक्त्रं वीक्षमाणो न तृप्यति ।
चकोर इव शुभ्रांशुं कृष्णो लोभेन संप्लुतः ॥७६॥

अगायन् गोपिकास्तत्र कलकंठ्यो मृदुस्वरं ।
कृष्णोऽपि तद्गीः संहृष्टो मन्यते साधुसाध्विति ॥७७॥
ताभिर्युतस्तदा कृष्णः शोभां तस्मिन्सरोवरे ।
आलोकयत सोल्लासं षट्पदीमधुपान्विते ॥७८॥

ताः सर्वाः केशवं स्पृष्ट्वा प्राप्नुवन्परमां मुदम् ।
स कौतुकी तदा कृष्णो राधां प्राह प्रहस्य च ॥७९॥
कृष्णः—छलादरण्ये सर्वास्ता गत्वा च निबिडे प्रिये ।
वंचयामः कौतुकेन किं करिष्यन्ति तास्ततः ॥८०॥

वृन्दा—गृहीत्वेति करे राधां तासां संपुरतः छलात् ।
अदृश्योभूच्च गोविन्दः कौतूहलपरायणः ॥८१॥

तास्तत्र दयितं कृष्णं राधिकां च मनोरमाम् ।
नो बिलोक्य तदा भद्रे परं विस्मयमागताः ॥८२॥
प्राहुः परस्परं सर्वाः किमिदं किमिदं तच्च ।
क्व गतो नो मनो नीत्वा कृष्णो राधापरायणः ॥८३॥

नबरागेण संलुब्धाः कृष्णे याः बितमानसाः ।
अदृष्ट्वा तं कृष्णं सर्वा व्यलपन् दुःखितास्तदा ॥८४॥
अपश्यन्परितः सर्वा बाष्पपूरितलोचनाः ।
किमिदं परमाश्चर्य्यं कृष्णो यन्नैव दृश्यते ॥८५॥
काचिद्भ्रमादुपव्रज्य तमालं श्यामलाकृतिम् ।
समालिङ्गितं बाहुभ्यां तद्भावेन विचेष्टिता ॥८६॥

स्वर्णयूथ्या लतां दृष्ट्वा पिंगपुष्पैः प्रफुल्लिताम ।
काश्चित्तद्वदनभ्रान्त्या हृद्याकर्षंति च विह्वलाः ॥८७॥

वदन्ति स्म च तं प्रेम्णा नाथैतदुचितं त्वयि ।
अस्मान्सर्वा वने त्यक्त्वा गतो यत्प्रिययान्वितः ॥८८॥
तदिदानीं गृहीतस्तु पलायिष्यति तत्कुतः ।
चौरं मनोहरं प्राप्य कस्त्यज्यत्येव दुर्मतिः ॥८९॥

मत्तः कथं त्वनिमुक्तिं याचसे नन्दनन्दन ।
मुक्तास्त्वयापि ये केचित्ते त्वां जातु त्यजंति न ॥९०॥
काश्चिन्मयूरमालोक्य धावन्ति स्माथ विह्वलाः ।
त्यक्त्वाथ नः कथं नाथ स्वयं यासि वनान्तरे ॥९१॥
नैवास्थातुं क्षणं प्रेष्ठ त्वां विना नन्दनन्दन ।
अस्मिन्निविडकान्तारे वयं सर्वा हि शक्नुमः ॥९२॥

परिदर्शय नो नाथ स्ववक्त्राब्जं सुशोभितम् ।
भृंगमालाभिरिव यच्चिकुरैः परिरञ्जितम् ॥९३॥
किं विस्मरामस्त्वद्रूपं त्रैलोक्योत्तरमेव यत् ।
मुहुर्मुहुर्नो हृदयं यद्ग्लापयति मोहन ।॥९४॥
स्मेरापांगैरपि तव दृवेलिता या कदाचन ।
स्वं धर्तुं सा कथं नाथ शक्नोत्यत्यंतमोहिता ॥९५॥
यया पीतः सकृत्कृष्ण तवाधरसुधारसः ।
तस्य स्वादप्रलुब्धा सा कथं जीवति तं विना ॥९६॥

या स्पृष्टा त्वत्कराब्जेन शीतलेन मनोहर ।
कथं त्यजति सा तापं विना तं स्पर्शलोभिनी ॥९७॥
बाहुभ्यां या सकृन्नाथ संश्लिष्टा यत्त्वयाबला ।
स्मरन्ती तन्मुखं सा तु कथं प्राणं च धारयेत् ॥९८॥
क्वचित्स्वभावतो नाथ यस्या अंसे स्वदोर्लताम् ।
धारिता विस्मरेत्सा तु तदानन्दं कथं बने ॥९९॥
निजकण्ठात्समुत्तार्य्य यस्यां कण्ठे मनोरमा ।
आरोपिता त्वया माला कथं नीत्वा न संस्मरेत् ॥१००॥



निजांगेऽप्यंगरागं ते या पश्यति मनोहर !
तदामोदं समाघ्राय सा च मुह्यति विह्वला ॥१०१॥
या तु शृणोति त्वद्वंश्या नादेन मधुसूदन !
सा कथं त्वामदृष्ट्वा वै जीवितं शक्नुयात्ततः ॥२॥

एवं कृष्णमपश्यंत्यः स्मरंत्यस्तद्गुणान्मुहुः ।
बाष्पाभिषिक्तमुख्यगता व्यलपन्नतिदुःखिताः ॥३॥
अन्वेषणाय कृष्णस्य गता सर्वा बनान्तरे ।
तस्मिन्निक्षिप्तचित्तास्ता भ्रमन्त्येव इतस्ततः ॥४॥
अन्वेषयन्त्यस्तं कृष्णं वृक्षे वृक्षे तु नन्दिनि !
अपि कुंजे प्रकुंजेषु प्रविशंति विमोहिताः ॥५॥

नापश्यन्गोपसुदृशो गोविन्दं विपिनान्तरे ।
ततोऽतिदुःखवलिताः परं विस्मयमागताः ॥६॥
पुनः संलब्धसंज्ञास्तास्तदा प्राहुः परस्परम् ।
साश्चर्य्यं च बिखिन्नांग्यो मृगयन्त्योऽपि तत्स्मृतिम् ।७।

गोप्यः—दृश्यतां दृश्यतामस्या राधाया भाग्यगौरवम् ।
यस्यामतीव गोविन्दो रागं वहति सर्वदा ॥८॥
तया चाद्भुतरूपेण मोहितः सोऽपि मोहनः ।
तद्वशे वर्त्तमानो वै नान्यां कांक्षति कामिनीं ॥९॥
सखि तस्याः सत्यमेतद्रूपछायां कदाचन ।
न शक्ता श्रीरपि स्प्रष्टुं वयं काश्च तदग्रतः ॥१०॥

तथापि कृष्णे गोविन्दे स्पृहा लोभवती बलात् ।
मंनोदयति नस्तूर्णं मनांसि च मुहुर्मुहुः ॥११॥
न दृश्यंतेऽपि तास्तस्याः सख्यो वै ललितादयः ।
किं तत्रैव गताः सख्यः सुखसंवीक्षणोत्सुकाः ॥१२॥

वृन्दा—एवं संतप्तमानास्ताः कृष्णान्वेषणतत्पराः ।
हा नाथेति क्रन्दमाना प्राप्ता निविडकानने ॥११३॥

स्नेहेन राधिकास्कंधे निधाय निजदोर्लताम ।
संप्राप्तस्तद्विनोदाय हरिर्यूथ्यालतागृहे ॥११४॥
नवोढ़ा प्रथमे संगे सखीसंघबिवर्जिता ।
प्राप्ता रहस्थलं तत्र कृष्णं दृष्ट्वा विभायसा ॥१५॥
तत्र कृष्णेन मृदुलैः पल्लवैरुत्पलोत्तमैः ।
रचिता निजहस्तेन शय्याऽत्यन्तमनोरमा ॥१६॥
उपवर्हणमुत्कृष्टं पुष्पैस्तत्र च निर्मितम् ।
माला च गुम्फिता रम्या प्रियार्थाय च नन्दिनि ॥१७॥
सुगन्धीन्यपि पुष्पाणि तस्याश्चूडामणौ तदा ।
आरोपिता निहारेण कुंजपुष्पै र्विमण्डयत् ॥१८॥
इति कृत्वा तदा कृष्णः प्रियामालोभयच्छनैः ।
पटुबाक्यबिलासेन तां त्रस्तां गन्तुमिच्छतीम् ॥१९॥
दुःसहं सहसा नूनं मकरध्वजसंगरे ।
आदौ सेनामुखस्यैव तेजः परमदारुणम् ॥२०॥
सा संनद्धं तदा कृष्णं बिलोक्य सुभटोत्तमम् ।
दुर्गं कुंजगृहे प्राप्तं कातर्य्येण विमुह्यत ॥२१॥
युद्धोद्यतस्तया दृष्टस्तत्र कृष्णोऽपि नन्दिनि ।
पलायितुं रुद्धमार्गा धैर्येणैव स्थिता ततः ॥२२॥
अजानन्त्यापि तद्युद्धं स्वलावण्यबलेन वै ।
तथापि निर्जितः कृष्णस्तया तस्मिन् रणे सखि ॥२३॥
नवसंगमसंजातपरमानन्दनिवृतो ।
निःसृत्य प्राप तां तस्मादशोकलतिकागृहं ॥२४॥
क्षणं विश्रमितौ तत्र मिथो रागेण यन्त्रितौ ।
शृण्वतौ सख्याः हा रावं परां मुदमवापताम् ॥२५॥
तत्रैव कौतुकात्कृष्णः प्राह राधां सलीलया ।
तस्याः स्नेहदशां द्रष्टुं किं करिष्यति मां विना ॥२६॥



कृष्णः—परिच्छन्नो भवाम्यत्र यदिमां त्वं ग्रहीष्यसि ।
तदा हि त्वज्जये राधे दास्ये तुभ्यं स्ववंशिकाम् ॥२७॥
न ग्रहीष्यसि यन्मां त्वं तदाहं त्वद्धृदि स्थितम् ।
ग्रहीष्यामि प्रिये सद्यो हारं मुक्तागणाञ्चितम् ॥२८॥
इत्युक्त्वा सहसा कृष्णोऽलक्षोभूच्च तदग्रतः ।
एकाकिनी तदा राधा संमार्गयति तद्वने ॥२९॥
गत्वा तमसि पुंजे सा वृक्षमूलं विलोक्य वै ।
प्राप्तोऽसि त्वं कुतो यासि बृक्षं ज्ञात्वा हसत्यपि ॥३०॥
दूराद्धावति सा राधा तद्बुद्ध्या संभ्रमाकुला ।
अत्र कृष्णः प्रलीनस्थो भविष्यति न शंसयः ॥३१॥
अपि पश्यति रन्ध्रेषु कुंजागारं भ्रमेण सा ।
किं प्रलीनोसि नाथ त्वं शीघ्रं निर्गम्यतां वहिः ॥३२॥
एवमालोकयन्ती सा कृष्णं त्रिभुवनेश्वरम् ।
यदा प्राप्तो न कुत्रापि तदेवं समचिन्तयत् ॥३३॥
राधा—मयैवान्वेषितं सर्वं वनं तत्र प्रयत्नतः ।
कुत्रापि त्वं न लब्धोऽसि किमाश्चर्य्यं न वेद्म्यहं ॥३४॥
स च क्रोडाच्छलान्नूनं त्यक्त्वा मामन्यतो गतः ।
यदहं प्राप्नुयां तं न नूनमत्र कुतूहलम् ॥३५॥
नूनं कश्चिन्महान्दोषो ज्ञातस्तेन विगर्हितः ।
यस्मान्मां रहसि त्यक्त्वा गतः स निविडे बने ॥३६॥
कथं त्यक्तं मया तस्य मोहाच्चैलांचलं तदा ।
यत्साम्प्रतं तं बिना वै स्वयं धर्त्तुं न शक्यते ॥३७॥
तस्मिन्काले तु मे बुद्धिः संजाताभूच्च कीदृशी ।
यया विस्मारितस्तस्य बिश्लेषोऽतीवदुर्भरः ॥३८॥
ज्ञातं यन्मुरलीलब्धो परकौतूहलेन वै ।
तस्या दुर्ल्लभता लोभान्मया ज्ञातं न तत्र हि ॥३९॥

क्व द्रक्ष्यामि क्व गच्छामि कं पृच्छामि बनान्तरे ।
तं स्वेच्छाचारिणं कृष्णं कुतः पश्यामि कातरा ॥१४०॥

बृन्दा—एवं चिंतयती बाला कृष्णे संसक्तमानसा ।
वृक्षान्तरमनुप्राप्य क्षणं विस्मयमागता ॥४१॥

ललिताद्याश्च तत्सख्यः प्राप्तास्तद्वै लतागृहम् ।
यत्र कृष्णेन सा राधा स्थिता प्रथमसंगमं ॥४२॥

तत्र तस्याश्च वैचित्रीं वीक्ष्यमाणा मुदं गता ।
कृष्णो वशीकृतो यत्र तया लावण्यकौशलैः ॥४३॥

प्राहुः परस्परं हृष्टास्तद्विचेष्टां यथा तथा ।
तत्सुखेन सुखापन्ना विपर्य्ययगताः समाः ॥४४॥

ललिता--पश्यतां चित्रमस्या दै लीलया हसितापि सा ।
सव्यथं रुदतो चेयं चिरं धैर्य्यं विधास्यति ॥४५॥

साम्प्रतं कौशलैश्चित्रैर्मीनकेतोर्महारण्ये ।
निर्जितः सहसा कृष्णः सुभटो दुर्जयो यया ॥४६॥

बृन्दा--तदा तयोश्च पदवीमन्वेषंत्यो बनान्तरे ।
सख्यो गमन्नातिदूरे सा प्राप्ता तत्र राधिका ॥४७॥

तां विलोक्य विस्मृतास्ता सर्वास्तु किमिदं सखि !
प्राहुः स्नेहविखिन्नांग्यो गोविन्दः क्व गतः प्रिये ॥४८॥

राधा—किं पृच्छसि त्वं ललिते मां दीनां तदुपेक्षिताम् ।
न जाने क्व गतो धूर्त्तः कामिनीकुललम्पटः ॥४९॥

लीलाछलेन मां भद्रे वंचयित्वा बनान्तरे ।
अत्रैवान्तरितः सोऽय न प्राप्तश्च कथंचन ॥५०॥

अयि पश्य प्रिये तेन त्वां बिनाहं कदर्थिता ।
एकान्ते निर्जनारण्ये किं वदामि तु तत्खलु ॥५१॥

लुञ्चिता कंचुकी मे यद्बलेन नखरैः खरैः ।
प्रापितो व्याकुलीभावं निश्चलः कचसंचयः ॥१५२॥



मुक्ताहारो मम छिन्नो गम्भीरा किं वदिष्यति ।
वाष्पव्याकुलनेत्रायाः कज्जलं चलितं मम ॥१५३॥

अकांक्षन्त्यै बोटिकां मे दत्वा रागमिषेण यत् ।
स्वाभाविकः शोणिमान्यो हृतस्तेनाधरस्य मे ॥५४॥

किं वर्णयामि त्वामन्यन्सर्वं पश्य च तत्कृतम् ।
किं वदिष्यति मामम्बा त्वां च मत्संगवर्त्तिनीम ॥५५॥

उचितं तेन यद्धूर्त्ते मां क्षिप्त्वा तस्करालये ।
स्वयं तटस्थाभूस्तत्र गम्भीरा किं वदिष्यति ॥५६॥

दुर्विहारोप्यसौ यस्माद्विज्ञायागमनं तव ।
भयेन मां परित्यज्य गतः कुंजान्तरे सखि ॥५७॥

ललिता-मुग्धे त्वया कथं त्यक्तो दुर्लभः स पुरः स्थितः ।
तत्राप्यस्मिन्बने दुर्गे दुर्गयो हृदयेषु यः ॥५८॥

मुरलीधनलोभेण प्राणनाथस्त्वया कथम् ।
परिमुक्तः स गोविन्दः किमिदानीं च ताम्यसि ॥५९॥

बृन्दा—एवमुक्त्वाथ ललिता राधाहस्तं प्रगृह्य च ।
अन्वैषयत्तदा कृष्णं गह्वरे विपिनान्तरे ॥६०॥

ताः सर्वा गोपसुदृशोऽन्वेषयन्त्यो हरिं तदा ।
अपश्यन् राधिकां तत्र सखीभ्यामतिविह्वलाम् ॥६१॥

प्राहुः सर्वाः क्व ते प्रेष्ठः कस्मादेकाकिनी प्रिये ।
तेनापि त्वां विना यस्मात्क्षणं नेतुं न शक्यते ॥६२॥

गोप्यः--अहो चित्रं तच्चरित्रं न हि जानाति कश्चन ।
प्राणादपि प्रियां राधां तां त्यक्ता यद्गतोऽन्यतः ॥६३॥

किं वयं तत्र यस्यास्तु कैंकर्य्यं स्पृहयामहे ।
श्रीकृष्णस्यांगसेवायां प्राप्त्यर्थं यत्क्षणस्य हि ॥६४॥

त्वां विना तस्य राधे वै क्षणोऽपि हि युगायते ।
तस्मान्नैवातिदूरेऽसौ भविष्यति न संशयः ॥१६५॥

अन्वेषयामः सर्वा वै वृक्षे वृक्षे मनोहरम् ।
अन्विष्यमाणो नो दूरे तत्परत्वेन राधिके ! ॥१६६॥
वृन्दा--एवं यतस्ततः सर्वा मृगयन्त्यो हरिं तदा ।
स्वसख्या राधिका वाथ अगमंस्तत्परायणाः ॥६७॥

यत्रासीन्सखि गोविन्दो निलीनः कुंजसद्मनि ।
अकस्मादन्तिके तस्य राधा प्राप्ता सखीवृता ॥६८॥
अंगामोदेन कृष्णस्य सुरभीभूतमेव तत् ।
राधयालक्षितं नूनं कृष्णो लीनः स्थितोऽत्र हि ॥६०॥

अपि सा तस्य कुंजस्य द्वारमप्राप्य सुन्दरी ।
अभ्रमीन वै यतो हर्षात्कौतूहलपरायणा ॥ ७० ॥
कृष्णेन निश्चितं सम्यक् चेद् ग्रहीष्यति मां प्रिया ।
स्याद्दातव्या तदा वंशी कर्त्तव्यं तच्छलं मया ॥७१॥

तावत्कृष्णः स्वछलेन प्रकटोऽभूत्तदन्तिके ।
स्मेरापांगविनिर्मोक्षैर्मोहयन्निव मन्मथम् ॥७२॥
निर्जितासि मया राधे वचनं प्रतिपालय ।
यदुक्तं मां प्रदातुं तत्तूर्णं देहीति वाब्रवीत् ॥७३॥
वृन्दा—कृष्णं विलोक्य सहसा संप्राप्तं सा स्वपार्श्वके ।
अचिंतयन्कुतश्चित्रं प्राप्तोऽयं यन्मनोहरः ॥७४॥
राधा--मया प्रथमतो नूनं वक्तृपरिमलेण वै ।
गृहीतोऽसि पुनस्तस्माद् दीयतां निजवंशिका ॥७५॥
ललिता-किमिदं ते समुचितमेषा पुष्पकलेवरा ।
कदर्थिताऽस्ति नितरां चन्द्रांस्य पश्य तद्गतिम् ॥७६॥
कृष्णः--विपरीतं वदत्येषा तवाली ललिते यतः ।
साम्प्रतं स्वयमाप्तोऽहं गृहीतोऽस्ति वदत्यपि ॥७७॥
पश्य मे मुकुटस्यैवं चन्द्रिका लुञ्चिता नखैः ।
वक्षः पीठोऽपि मे नूनं रोषेण लिखितोऽनया ॥१७८॥



राधा—यत्कृतं च स्वयं काममारोपयसि तत्परे ।
धूर्त्तविद्याविशेषज्ञ मुंचमेवं वनं क्षणम् ॥१७६॥
कृष्णः—ललिते यत्कृतं नूनं वचनं मयि राधया ।
कथं न पालयत्येषा न युक्तं वाक्यलंघनम् ॥८०॥
ललिता—यत्क्रीडायां कृतो राधे ग्लह एव त्वया स्वयम् ।
तत्पालनीयं वचनं लंघनीयं न च क्वचित् ॥८१॥
राधा—किं न दृष्टं त्वया यस्मान्मदाकृष्टोयमातुरः ।
प्रादुर्भूतः स्वयं नैष ग्रहीष्याम्यस्य वंशिकाम् ॥८२॥
ललिता-पराजयं स्वकीयं हि मन्यते नैव कश्चन ।
यथोचितमुपायोऽत्र नूनं सम्यक् विचार्य्यताम् ॥८३॥
वृन्दा—ललिता हार्दमाज्ञाय कृष्णः स्नेहेन संप्लुतः ।
उपसृत्य कराभ्यां तु संस्पृष्टो हारमुज्वलः ॥८४॥

तदा तत्रैव ताः सर्वा प्राप्ताः कृष्णपदान्तिके ।
तस्मिन्वहन्त्यश्चापूर्वं रागं परमदुर्लभम् ॥८५॥
निजनेत्रचकोराभ्यां तस्यास्येन्दोः सुधारसः ।
पिबन्त्यो नाप्यतृप्यं स्ताः सख्यो निमिषलोचनाः ॥८६॥
ताभिः समं तदा कृष्णो राधास्नेहेन यन्त्रितः ।
स संप्राप्तः राजमानः सरोवर्य्ये तु मानसे ॥८७॥

तत्र संरक्षितं रम्यं रासमण्डलमद्भुतम् ।
तच्छीतलजलासिक्तं चन्दनचार्च्चितं पुनः ॥८८॥
निखाता कदलीस्तम्भाः सपर्णाः हरितस्ततः ।
पल्लवानां तोरणं च वेष्टितं च समन्ततः ॥८६॥
फलानि वहुवर्णानि पुष्पमाला मनोहराः ।
रचनाभिर्विरचिता लम्बमानाः सुशोभिताः ॥६०॥
पूर्णचन्द्रमयूखैस्तद्द्योतमानं विराजितम् ।
सुखस्पर्शसमीरेण शिशिरीकृतमुज्वलम् ॥६१॥

परिष्वज्य भुजाभ्यां तां राधिकां प्राणवल्लभाम् ।
अपि गोपकिशोरीभी रासं प्रावर्त्तयद्धरि: ॥१९२॥
गोपीनां मण्डलीं कृत्वा हाराकारां तु शोभिताम् ।
अरंजयन्छलात्कृष्ण: सर्वासां रमणेन स: ॥१९३ ।

मन्यमानाश्च ता: सर्वास्तं श्रीकृष्णं निजान्तिके ।
राधाप्रभृतयो वाथ तस्य स्नेहेन यन्त्रिता: ॥१९४॥
मन्यमानाश्च तास्तत्र नृत्यन्त्यश्चातिनन्दिता: ।
हरिणा स्पृश्यमाणाश्च परं सुखमवाप्नुवन् ॥१९५॥
काचिन्नृत्यबिनोदेन नन्दयंती हरिं तदा ।
स्वयं स्नेहेन बाहुभ्यां समालिंगन्प्रियं मुदा ॥१९६॥

श्रीकृष्णेन समं काचिद्गायंती मधुरस्वरं ।
पश्यन्ती तस्य चास्याब्जं परमानन्दिता भवत् ॥१९७॥
काचिन्कृष्णदुकूलांतं गृहीत्वैब समं मुदा ।
सुनृत्यंती स्म तं प्रेम्णा परिष्वज्याथ मुह्यति ॥१९८॥
काचिन्कृष्णभुजां स्कन्धे निधाय स्नेहबिह्वला ।

चुम्बयंती तत्कराब्जं नृत्यंती मुदमाप्नुबन् ॥१९९॥
मालामोदं तस्य काचिदाघ्रायाहृष्टमानसा ।
स्थित्बा तत्पार्श्वके स्नेहात्क्षणं बिस्मयमागमत् ॥२००॥
एवं तासां किशोरीणां स्नेहेनायन्त्रिताशय: ।
कृष्णोऽप्यरमयद्गोपी सर्वास्ता मृदुजल्पनै: ॥२१॥
तदा कृष्ण: प्रियां राधां नृत्यबिद्याबिशारद: ।
अनन्दयन्स्वचातुर्य: संगीतगुणकोविद: ॥२२॥
वीक्षमाणस्तन्मुखेन्दुं मन्दं मन्दं स्मितानन: ।
पादन्यासैर्भुजाक्षेपै नृत्यन्स मुदमागमत् ॥२३॥
सापि नृत्यबिनोदेन नन्दयंती ब्रजेश्वरम् ।
तस्मिन्कटाक्षप्रक्षेपै हसन्तीब मुदं गता ॥२४॥



कृष्णोच्चारितशब्देन करतालादिसंयुतम् ।
अनृत्यदतिहर्षेण राधा प्रेष्ठावलोकनात् ॥२०५॥
मुरलीस्वरमाधाय गायन्त्युच्चैर्मुदान्विता ।
तां च प्रशस्य गोविन्द: परिष्वज्य मुदं गत: ॥६॥

स्वेदबिन्दूंस्तदा तस्या: पाणिना मार्जयद्धरि:।
प्रतोषिता च ता वाक्यै रञ्जिता मधुरैर्मुहु: ॥७॥
वादयन्त्यो मृदंगानि तद्बिद्यायां च कोविदा:।
तालानि धारयत्यस्तास्तालविद्याबिशारदा: ॥८॥

काचिद्वीणां बादयंती मुरलीस्बरमिश्रिताम् ।
अतोषयद्धरिं तत्राशंसिता हरिणापि सा ॥२६॥
एवं रासबिलासेन हृष्टचेता स्तदा हरि: ।
युवतीभि: श्लिष्टबाहुं यमुनां प्राविशन्सखि ॥१०॥

ताभि: समन्तात्सोत्तालं सिच्यमानो मुहुर्मुहु: ।
शोभां प्राप तदा कृष्णो मदस्रावी गजो यथा ॥११॥
परस्परं ता: सिंचंत्यस्तं च सर्वा ब्रजांगना: ।
चित्रिता च कृता कृष्णा स्वांगरागेण नन्दिनि ॥१२॥
बिबस्त्राणामंगदीप्ति तज्जले वर्णयामि किम् ।
दीपावलि: प्रकाशंती पूर्णतमसि निर्भरे ॥१३॥

स जलै: कुमुदै ह्ष्टा निघ्नंत्यश्च परस्परम् ।
हसंत्यो हासयन्त्यश्च क्रीडां कृत्वा मुदं गता: ॥१४॥
तदा तत्पुलिनं गत्वा ह्यार्द्रं शीतलवारिणा ।
कुमुदामोदसंव्याप्तं कुमुदेशकराञ्चितम् ॥१५॥
कुमुदैर्निर्म्मिते पीठे राधाकृष्णौ मुदान्वितौ ।
उपबिष्टौ तत्र सर्वा स्थिता कृत्वा च मण्डलीम् ॥१६॥

कृष्णोऽपि नन्दयन् भद्रे सर्वास्ता मृदुजल्पनै: ।
पूर्णाशीष: कृता स्तेन यत्पूर्णोऽपि स्वयं हरि: ॥१७॥

अनिच्छंत्योऽपि ताः सर्वा गताः कृष्णानुरञ्जिताः ।
स्वगृहांश्च तदा राधा स्वसखीभ्यां गृहं गता ॥१८॥
कृष्णोऽपि स्वगृहं प्राप्तो रागिण्या चाभिरक्षितं ।
न नन्दिनि ब्रजे ज्ञातं केनाप्येतस्य चेष्टितम ॥१९॥

एवं ब्रजकिशोरीणामभिलाषः सुदुर्वहः ।
पोषितः सहसा तत्र राधाप्रेष्ठेन नन्दिनि ! ॥२०॥

राधा चन्द्रावली द्वे तु सर्वासां ते शिखामणी ।
तत्रापि चाधिका राधा कृष्णचन्द्रस्य दुर्लभा ॥२१॥

श्रद्धायुक्तो यः श्रृणोति हरेरेकांतचेष्टितम् ।
युवतीभिस्तस्य कृष्णे वर्द्धते तादृशी रतिः ॥२२॥

इतिश्रीकृष्णकौतुके रासविहारो नाम
चतुर्थः सर्गः ॥

## ❀ पञ्चमः सर्गः ❀

श्रुता देवि मयापूर्वा रासलीला मनोरमा ।
कृष्णस्यापि छलं तत्र यथारंस्त पृथक् पृथक् ॥१॥

गोवर्द्धनस्य पत्नी या कंसमल्लस्य सा कथम् ।
कृष्णे चन्द्रवली देवि ! प्रवृत्ता तच्च वर्णय ॥२॥

रासकेलिषु तस्या वै कथं न वर्णितस्त्वया ।
उत्कर्षो यद्धरेः प्रेष्ठा तस्मान्मे विस्मयः परः ॥३ ।

तन्सर्वं च यथार्थं मां वृत्तान्तं परमाद्भुतम् ।
वक्तुमर्हसि देवि त्वं श्रोतुमिच्छामि तत्वतः ॥४॥

वृन्दा—सौरभेण हरेर्भद्रे सौन्दर्य्यस्य ब्रजान्तरे ।
नितरां वासितं स्त्रीणां गन्धे लोभो विवर्द्धते ॥५॥



जिघ्रति स्म तु या जातु तदामोदमपूर्वकम् ।
निरर्गलेव सा तस्य पार्श्वे गन्तुं प्रवांछति ॥६॥

यथा मदगलद्गण्डं गजं भृंगांगनागणः ।
तद्गन्धेनाकृष्टचेता भजत्येव यतस्ततः ॥७॥

माधारणविहारो यद्रासे पूर्वोदितो मया ।
तत्रापि वल्लभा तस्य राधा सर्वोत्तमा यतः ॥८॥

चन्द्रावलीप्रसंगं त्वां कथयामि सविस्तरम् ।
अभूत्तस्या रतिः कृष्णे यथा नन्दिनि तत्वतः ॥९॥

एकदा प्रातरुत्थाय गोवर्द्धनमगाद्धरिः ।
समादाय गवां वृन्दं सखावृन्दैः समावृतः ॥१०॥

गावस्तस्य नितम्बे तु युक्ता यत्र हरित्तृणं ।
स्वसखिभ्यां स्वयं कृष्णः समारोहद्गिरिं तदा ॥११॥

तमपश्यत् गिरिं कृष्णः सद्द्रुमैः परिशोभितम् ।
पुष्पिताभिर्लताभिश्च सुरभीकृतशेखरम् ॥१२॥

रमणीयः शिलापीठः रत्नसिंहासनोपमः ।
सुखदः शीतलच्छायो द्रुमाणां चन्दनस्य यः ॥१३॥

तत्र स्पन्दन्ति सततं निर्भरा शीतलाम्भसः ।
शब्दायंते पक्षिगणाः केकाभिरतिमिश्रिताः ॥१४॥

तत्रोपविष्टो गोविन्दो प्रियनर्मसुहृद्वृतः ।
चित्रयन्नितरां गात्रं धातुरागेण नन्दिनि ! ॥१५॥

विचिनोति क्वचिद्भद्रे मायूरं चन्द्रिकाचयं ।
सखिभिर्हृष्टमनसा मौले विरचनाय च ॥१६॥

निर्झराणां क्वचित्पूरे परमोज्वलशीतले ।
विनिक्षिप्य शरीराणि क्रीडन्ति स्म मुदान्विताः ॥१७॥

क्वचिद्धस्तेन तद्वारि रुद्धंति कुतुकान्विताः ।
प्रवृद्धे च ततः स्नानं कुर्व्वंन्ति स्म यथा तथा ॥१८॥

तद्गेहेषु क्वचिद्भद्रे निक्षिप्य सलिलानि तत् ।
बिलोकयंतस्तल्लीलां परमानन्दमगमन् ॥१६॥
पानं कुर्व्वन्ति तत्रवादैर्गृहीत्वांजलिना जलं ।
सिञ्चन्तोऽपि मिथो भद्रे ! नानाकेलिपरायणाः ॥२०॥

एवं गोवर्द्धने रम्ये क्रीडयित्वा हरिस्तदा ।
प्राप्तो मानसगंगायामानीय सुरभीकुलम् ॥२१॥
बिराजन्ति सदा यत्र नानावर्णानि नन्दिनि !
कमलानि सुगन्धीनि सेवितानि शिलीमुखैः ॥२२॥

पाययित्वा जलं धेनूः पूतं परमशीतलम् ।
स्वयं पीत्वा बनं दृष्ट्वा प्रलुब्धोऽभूद्धरिस्ततः ॥२३॥
स्वेतं रक्तं पीतनीलं प्रगृह्य कमलं तदा ।
रचति स्म स्वहस्तेन मालामतिमनोरमाम् ॥२४॥

स्वकंठे स्थापिता भद्रे किं शोभां बर्णयाम्यहं ।
भृंगैः संसेव्यमाना या घने शक्रधनुर्यथा ॥२४॥
विनिवेश्याधरे वंशीं वादयन्मधुरस्वरं ।
कृष्णोऽपि व्यचरत्तत्र परमानन्दनिर्भरः ॥२५॥
चन्द्रावली तत्र काले पूजयित्वांम्बिकां मठात् ।
निर्गता तु निजालीभ्यां गन्तुं निजगृहं प्रति ॥२७॥
श्रुत्वा वंशीरवं तत्र नारीकुलमनोहरम् ।
किमिदं किमिदं प्राह परं विस्मयमागता ॥२८॥
चंद्रावली-किमेषोऽपूर्वनिनदो यो मोहयति मे मतिम् ।
भण्यतां भण्यतां तूर्णं नैव जानाम्यहं सखि ॥२६॥
पद्मा—त्वया तु न श्रुतः सत्यं कृष्णवंश्युद्भवो रवो ।
साध्वीनामपि नारीणां प्रमादयति यो मनः ॥३०॥
चन्द्रावली-कः कृष्णः कस्य पुत्रो वै बर्त्तते साम्प्रतं कुतः ।
कस्माद्वंशीरवे तस्य मोहनत्वमपूर्वकम् ॥३१॥



शंके स एव मंत्रज्ञः पठित्वा च मनोहरम् ।
मंत्रं मुहय्‌ंति यन्नार्य्यो वादयत्यपि वंशिकाम ॥३२॥
इदृशस्तु गुणस्तस्या वंशजायाः कथं भवेत् ।
सर्वासां घोषनारीणां संमोहयति या मनः ॥३३॥
पद्मा—क्व मंत्रे तादृशी शक्ति र्वशीकर्त्तुं बदामि ते ।
गोकुले गोपनारीणां त्वां यथार्थं सुलोचने ॥३४॥
वंशजा मुरली सत्यं जडरूपापि सुन्दरि ! ।
कृष्णाधरसुधासिक्ता सचैतन्येव बर्त्तते ॥३५॥

तस्याधरसुधामत्ता मादयत्यंगनागणं ।
तस्माच्च मधुरः शुद्धो वंशीनादो मनोहरः ॥३६॥
स कृष्णो नन्दतनुजो नातिदूरे भविष्यति ।
यं चापि पक्षिणः सर्वे पश्यंत्यूद्‌र्ध्वशिरोधराः॥६७॥

अपि पश्य मुखं तस्य द्रष्टुं धावन्ति वै मृगाः ।
कोलाहलं प्रकुर्व्वन्ति चक्रबाका जलाशये ॥३८॥
बृन्दा—अकस्मात्तत्र संप्राप्तः कृष्णो धूर्त्तेन संयुत. ।
वन्यवेशेण शोभाढ्यः स्मयमानमुखाम्बुजः ॥३६॥

पद्मया दर्शितो दूराच्चन्द्रावल्या हरिस्तदा ।
दर्शनीयतमः साक्षान्मनोभवमनोहरः ॥४०॥
चन्द्रावलीं स्स्थापयित्वा तदा पद्मा लतान्तरे ।
अग्रे स्थित्वा हरिं द्रष्टुं सैव्यादिस्वसखीयुता ॥४१॥

धूर्त्तेन च तदा सर्वं पद्मयाः कौशलं सखि ! ।
दृष्टं च दर्शितं क्षिप्रं श्रीकृष्णं च यथाविधि ॥४२॥
तावत्तदन्तिकं प्राप्तो धूर्त्तो गोविन्दनोदितः ।
प्राह पद्मां यथायोग्यं प्रियस्यानन्दहेतवे ॥४३॥
धूर्त्तः— गोपितः साम्प्रतं पद्मे चन्द्रकान्तमणिस्त्वया ।
कृष्णहस्तात्कुतो देहि धार्ष्ट्यं तेऽहं वदामि किं ॥४४॥

Scanned by TapScanner

न युक्तं तव तत्भद्रे ! हास्यमत्यन्तनिर्भरम् ।
कृष्णं प्रति ततः शीघ्रं दीयतां मणिरुत्तमः ॥४५॥

पद्मा--किं रूपः को मणिर्धूर्त्ते क्व कृष्णो नैव वेद्म्यहं ।
नाहं हास्यपरा तस्माद्विलोकय बनान्तरे ॥४६॥

दृष्टो नैव मया कृष्णः साम्प्रतं च कथं मणिः ।
तस्य हस्ताद्गृहीतोऽस्मि कस्मान्मिथ्यां प्रजल्पसि ॥४७॥
कदाचिन्न हरेर्हस्तं प्राप्तो धूर्त्त बदामि ते ।
चन्द्रकान्तमणिः कस्मादिदानीं तस्करं गतः ॥४८॥

धूर्त्तः—अनया विदग्धया पद्मे त्वं प्रौढ़ासि न संशयः ।
हरणे परवित्तस्य नयनादिव कज्वलम् ॥४९॥

पद्मा—दृष्टा मया सदा धूर्त्त कृष्णस्य हृदि लम्बिता ।
गुंजामणिकृता माला किं वित्तं तां प्रकल्पसे ॥५०॥

अपि दृष्टा मया तस्य मौलौ विरचिता यतः ।
मयूरचन्द्रिका पंक्तिश्चन्द्रकान्तमणिर्न तु ॥५१॥
ततस्तत्रैव संप्राप्तः कृष्णः सर्वार्थकोविदः ।
किमाकांक्षति धूर्त्तस्त्वत्पद्मे वद ममान्तिके ॥५२॥

पद्मा—सुन्दरेदं न जानामि किमाश्चर्य्यं वदत्ययम् ।
धूर्त्तश्च सर्वविद्यायां निपुणश्च यथा तथा ॥५३॥

धूर्त्तः—श्रेष्ठ सद्यो गतो हस्ताच्चन्द्रकान्तमणिस्तव ।
अनया गोपितश्चात्र स्वच्छलेन बलेन च ॥५४॥

कृष्णः—पद्मे वदत्ययं धूर्त्तः सत्यं सत्यं न संशयः ।
मया त्वद्य मणिर्दिव्यः संप्राप्तोऽत्रैव दुर्ल्लभः ॥५५॥

पद्मा--अन्वेषय स्वयं कृष्ण दुर्ल्लभं मणिमुत्तमम् ।
मया तु गोपितो नैव किमसत्यं वदामि ते ॥५६॥

धूर्त्तः--अस्मिन्नेव लताजाले प्रकाशस्तस्य वै मणेः ।
दृश्यते नात्र सन्देहस्तस्मादन्वेषयाम्यहम् ॥५७॥



पद्मा--सामर्थ्यं ते कुतो धूर्त्त गन्तुमस्मिन् लतागृहे ।
अत्र निष्ठत्यधिष्ठात्री गिरेरस्य प्रभान्विता ॥५८॥

धूर्त्तः--त्वं पद्मे किं न जानासि यन्सर्वत्र गतिर्मम ।
श्रीकृष्णस्य वयस्योऽहमियं का तब देवता ॥५९॥

कृष्णः--गोवर्द्धनगिरौ रम्ये का देवी या त्वयोदिता ।
पद्मे निरूप्यतां शीघ्रं तस्या नाम ममाग्रतः ॥६०॥

पद्मा—प्रसिद्धा त्रिषु लोकेषु सा गोवर्द्धनदेवता ।
किं वदामि यतः सर्वं जानन्ति ब्रजवासिनः ॥६१॥

कृष्णः—मया तु न श्रुतं जातु तस्या नामाप्यपूर्वकम् ।
पद्मे वदस्व वै तूर्णं कौतूहलं परं यतः ॥६२
प्रकाशयति या कुंजं चन्द्रकान्तमणिर्यथा ।
त्वत्तस्तां तु समकार्ण्य द्रक्ष्यामि तव संमतः ॥६३॥

पद्मा—को मणिः किं तु चन्द्रो वै तस्या आस्या प्रभाग्रतः ।
उदिता या च गोविन्द प्रकाशयति काननम् ॥६४॥

चन्द्राबलीति विख्याता पत्नी गोवर्द्धनस्य हि ।
स कंसनृपतेः कृष्ण बल्लभो मल्लपेशलः ॥६५॥
तस्मादस्य गिरेः कृष्ण देवी या लोकपूजिता ।
मणिव्याजने किं तां वै द्रष्टुं कामयते भवान् ॥६६॥

धूर्त्तः—उत्पाटितः स्वभावेन येन गोवर्द्धनो गिरिः ।
स एव कृष्णदेवोऽसौ पद्मे किं नहि पश्यसि ॥६७॥
किमपूर्वा व्रजे पद्मे ते सखी जगदुत्तरा ।
यामीक्षितुं न शक्नोति कृष्णस्त्रैलोक्यमोहनः ॥६८॥
कस्मादिदं निजाधिक्यं वदस्यपि ममाग्रतः ।
किं न सन्ति व्रजे मुग्धे ! सखतास्तव समांगनाः ॥६९॥

पद्मा—अपि सन्ति ब्रजे धूर्त्त गोपालानां वरस्त्रियः ।
एषा तु कंसनृपते र्वल्लभस्यातिबल्लभा ॥७०॥

स मानी लोकविदितो राजवैभवदर्पितः ।
तस्य भार्य्यां क्वचिद्द्रष्टुं कः समर्थो ह्यकोविदः ॥७१॥

धूर्त्तः—किं बलं येन नृपतेः कंसस्य प्रोषिताः पुनः ।
दैत्या वै गोकुले सर्वे हताः कृष्णेन लीलया ॥७२॥

किं भण्यते तदैश्वर्य्यं पद्मे पश्य मनोहरम् ।
श्रीकृष्णं घोषनारीणां हृदयालिन्दचारिणम् ॥७३॥

बृन्दा—इति पद्मा हरिं दृष्ट्वा मोहिताभूच्च नन्दिनि !
प्राह धूर्त्तं सविनयं लज्जयानतकंधरा ॥७४॥

पद्मा—अपि दृष्टं मया धूर्त्त व्रजे दैत्यवधादिकम् ।
तथापि त्रासयुक्तास्मि गोवर्द्धनभयादहम् ॥७५॥
शृणोति स कदाचिद्वा ममैतदतिसाहसं ।
न जाने कां दशां मां वै प्रापयत्यतिनिर्दयः ॥७४॥

सापि चन्द्रबली मुग्धा भीता तस्य भयेन वै ।
सदा वसति गेहेषु वहिर्गन्तुं न शक्यते ॥७५॥
कथञ्चिदद्य भवनान्निसृता देबतालये ।
श्वश्रुभिः संमता धूर्त्त पूजयत्वंविकामिति ॥७८॥

धूर्त्तः—पद्मे श्वश्रुश्च का तस्या वद मां त्वं यथाभिधं ।
कीदृशी सा तु गोपाली किं रूपा किं स्वभाविका ॥७९॥

पद्मा—किं पृच्छसि जरत्सर्पीं करालां लोकनिन्दिताम् ।
दृष्टिलग्नाऽस्ति मे धूर्त्त कदाचिन्नागमिष्यति ॥८०॥
यदि सा कुटिला धूर्त्त युष्मदादिकसंगमे ।
द्रक्ष्यति त्वां वधूं मां च तदा कुत्र वसाम्यहम् ॥८१॥
निवेदयति चेत्तोभ्रा गोबर्द्धनं मदान्वितम् ।
न जाने स महामर्षी किं करोति निशाम्य वै ॥८२॥

धूर्त्तः—पद्मे किं शंकसे बाढं करालायाः समागमं ।
नाद्यातिकालः संजातस्तव वै संभ्रमाय च ॥८३॥



निमग्ना गृहकृत्येषु व्रजे बृद्धा यथा तथा ।
तस्मात्त्वं निर्भया भूत्वा स्वसख्याः शुभमाचर ॥८४॥

कृष्णः—द्रष्टुं चन्द्रावलीं पद्मे तृष्णा बाध्यते मे खलु ।
किं त्वया जलदालीव रुद्धा वल्ल्यन्तरैर्वने ॥८५॥

बृन्दा—चन्द्रावली लताजाले कृष्णचन्द्रमुखासवम् ।
अपिवत्सक्तहृदया कामलोभेण यन्त्रिता ॥८६॥
अचिन्तयत्तमा हृदेशे मुहुश्चन्द्रावली तदा ।
किमियं रुक्षवाक्येन पद्मा वाधां करोति हि ॥८७॥

सत्यं निशम्य दुर्वाक्यं कठोरं पद्मयेरितम् ।
स्वयं निर्वन्ध्य गच्छेत्किं कृष्णो नारीमनोहरः ॥८८॥
चातुर्य्यं च तवैतस्मिन् धिक् वै पद्मे यतस्त्वया ।
रुद्धो नवोदितोंभोदस्तृषिताच्चातकीमुखात् ॥८९॥

त्वं मुग्धे किमिदं धैर्य्यं धृत्वा वदसि निश्चला ।
चित्रमस्य मुखं दृष्ट्वा सुमनांस्यकिरन् लताः ॥९०॥
कः कंसः कः पतिर्मानी का कराला दुरात्मिका ।
यत्प्रसंगाद् घनश्यामं मूढे संबारयस्यलम् ॥९१॥

बृन्दा—धायंतीव बिखिन्नांगी विकलेब लतालये ।
मुहुः पद्मा मुखं दृष्ट्वा गोबिन्दं सा समैक्षत ॥९२॥
तावत्कृष्ण उपागम्य पद्मां चालयति स्म हि ।
कथमाच्छादितो धूर्त्ते चन्द्रकान्तमणिर्मम ॥९३॥

पद्मा—एवं मा कुरु गोविन्द क्षम्यतां तु क्षणं त्वया ।
अहं यामि स्वयं तत्र विचिनोमि मणिं तव ॥९४॥

बृन्दा—पद्मा चन्द्रावलीं पार्श्वे गत्वा प्राहेदमंजसा ।
हसंतीव तदा भद्रे पूर्णाशामतिलोभिनीम् ॥९५॥

पद्मा—स्वस्था कथं स्थिता भद्रे गह्वरे लतिकागृहे ।
चन्द्रकांतमणिं त्वत्तः समाकांक्षति मोहनः ॥९६॥

यदि सत्यं त्वया नीतः परकीयो मणिस्ततः ।
सतृष्णं याचमानाय देहि मुग्धे पटांचलात् ॥९७॥

वृन्दा—इति पद्मावचः श्रुत्वा चन्द्राबली मुदान्विता ।
मंध्यायति स्म हृद्देशे प्रेमपूरितमानसा ॥९८॥

चंद्राबली-पद्मया निजचातुर्य्यं लोभयित्वापि मोहनः ।
आनीतो मम सांनिध्ये ज्ञातं सा प्रियकारिणी ॥९९॥

वृन्दा—इत्यानन्दभरा तन्वी धैर्य्यमालम्ब्य तत्क्षणम् ।
अवदन्मधुरं किञ्चिदुत्तरं तु यथा विधि ॥१००॥

चन्द्रावली-गोकुले गोपनारीणां चित्तो वित्तं स्वयं यतः ।
चोरयित्वा पुरे नीत्वा तद्गुणं रोपयत्यलम् ॥१०१॥
किं विश्रब्धासि पद्मे त्वं मोहनस्य सुजल्पनैः ।
तस्मात्त्वया प्रणीतो स्तु चन्द्रकान्तमणिर्वत ॥२॥

पद्मा—मुञ्च मुग्धेति हास्यं वै कृष्णं प्रति सुलोचने ।
एष संतप्यते काममदृष्ट्वा तं मणिं यतः ।
त्वया भद्रे न नीतो यत्कृष्णस्य सुमणिस्ततः ।
संमुखं पश्य सुतरां परीक्षेऽस्मिन्तवेक्षणे ॥४॥

वृन्दा—इति चन्द्रावली मुग्धा श्रुत्वा पद्मावचस्तदा ।
विलोकयंती गोविन्दं तां सखीं समतर्जयन् ॥५॥

चन्द्रावली—पद्मे तवेदृशं कर्म श्वश्रूणामग्रतस्त्वहं ।
कथयिष्यामि रुद्धा यद्धूर्तं दर्शयितुं त्वया ॥६॥

पद्मा—यश्चौर्य्यं निजवित्तस्य समारोपयते वलात् ।
युक्तं तस्य प्रतीतार्थं कर्त्तव्यं तददारितम् ॥७॥

वृन्दा—चन्द्रावलीमुखं दृष्ट्वा कृष्णो लोभेण यन्त्रितः ।
अवर्णयच्छवि प्रेम्णा नैवातृप्यत्संदर्शनात् ॥८॥

कृष्णः—चन्द्राबल्याः किमस्या वै मुखचन्द्रप्रभा समा ।
प्रभया कोटिचन्द्राणां सत्यं चन्द्रावलीत्वियम् ॥९॥



वृन्दा—एवं च साभिलाषो वै कृष्णः पश्यति तन्मुखम् ।
अहसीत्सुतरां ताभिर्मधुरं मृदुजल्पनैः ॥११०॥
तावत्पद्मेति जल्पंती कराला सा समागमत् ।
सर्वास्तास्त्राससंयुक्ता जातास्तस्मिन्क्षणे वत ॥११॥
श्रीकृष्णोऽपि तदा भद्रे विमनस्कश्च तत्र हि ।
अभवन्किमभूच्चित्तं कुत एषा समागता ॥१२॥

कृष्णः—प्रलोभिता कुरंगीव नानायत्नैश्च सांप्रतम् ।
श्रुत्वा दुर्निनदं व्याघ्रयाः पुनः संचकिता भवेत् ॥१३॥

वृन्दा—चन्द्राबली करालायाः निशम्य वचनं तदा ।
अभवद्विस्मिता भद्रे कृष्णस्नेहेन यन्त्रिता ॥१४॥

चंद्राबली-अहो चित्रा गति र्धातु र्न रक्षति निरन्तरम् ।
एकत्र वै प्रियजनं जरत्या यत् द्विधाकृतम् ॥१५॥

वृन्दा—चिंतयंती काममेवं चन्द्राबल्यातिदुःखिता ।
तावत्तस्यांतिकं प्राप्ता कराला तु भयंकरी ॥१६॥

कराला-कथं पद्मे त्वया वैषा रक्षिता विपिने यतः ।
मध्यान्हसमयो जातः कारणं वद सत्वरम् ॥१७॥
विलोक्य पार्श्वके कृष्णं वक्रदृष्ट्या व्यचष्ट सा ।
कस्मात्तिष्ठसि कृष्णात्र मे वधूनिकटे वद ॥१८॥
नहि जानासि भर्त्तारं त्वमस्या मानदर्पितम् ।
तस्माद्व्रजगवां वृन्दं चारयस्व जनैर्वृतः ॥१९॥

वृन्दा—एवमुक्त्वा तदा पद्मामतर्जयत्सा मन्युना ।
त्वया च क्रियते चित्रं चरित्रं निर्जने बने ॥२०॥

पद्मा--किं तर्जयसि मामार्ये यदयं नन्दनन्दनः ।
अकस्मात्स्वमणेश्चौर्य्यमारोपयति मां प्रति ॥२१॥
तस्मादनेन रुद्धाः स्मः वयमस्मिन्लतागृहे ।
साम्प्रतं लब्धशरणास्त्वया यामो निजालयम् ॥१२२॥

कृष्णः—किं पद्मे परवित्तं च चोरयित्वा यथा तथा।
संप्राप्य जरतीं त्वं वै पलायिष्यसि मेऽग्रतः ॥१२३॥
कराला-मुंच कौतूहलं कृष्ण कश्चोरयति ते मणिम्।
संनिगृह्य वधू हस्तमगमत्सा स्वमन्दिरम् ॥२४॥

बारं वारं छलात्तन्वी कृष्णबक्त्राम्बुजं तदा।
वीक्ष्यमाणा शनैस्तस्मादगाच्चन्द्रावली सखि ! ॥२५॥
तदा संप्रेषितो धूर्त्तः पद्मया अन्तिके सखि !
चन्द्राबल्याश्च कृष्णेन संगमाबधिहेतवे ॥२६॥

पद्मा विलोक्य तं दूराद्धूर्त्तं गोविन्दनोदितं।
संज्ञयाऽगदत्तत्र संकेतो मुरलीरबः ॥२७॥
तां च तद्रासससमये संप्राप्तां कृष्णपार्श्वके।
अरीरमद् यथा कामं गोविन्दः सुखदायकः ॥२८॥

तावत्सा रागिणी नीत्वा संप्राप्ता भोज्यमुत्तमं।
निधाय कृष्णसांनिध्ये परां मुदमथागमत् ॥२९॥
भोजनं च कृतं तत्र वयस्यैः सह नन्दिनि।
उक्तं च हरिणा सर्वं बृत्तान्तं रागिणीं प्रति ॥३०॥
रागिणी कृष्णवदनं बिलोक्य च मुहुर्मुहुः।
भाजनानि समादाय ययौ नन्दनिकेतनम् ॥३१॥
कृष्णोऽपि समये प्राप्ते पुरस्कृत्य गवां कुलं।
स्ववयस्यगणैर्युक्तः प्राविशत्स्वव्रजं सखि ॥३२॥
एवं चन्द्राबली कृष्णमनुसृत्य स्वयं सखि।
गाढ़रागेण नितरां यन्त्रिताभूच्च नन्दिनि ॥३३॥
इतीदमद्भुतं बृत्तं नहि जानाति कश्चन।
उक्तं त्वां प्रति यस्मात्त्वं श्रद्धायुक्तासि नन्दिनि ॥३४॥
रागेण हि वशीभूतः कृष्णश्चास्मन्व्रजान्तरे।
मिथोऽनुभजते नित्यं रागिणी रागवानपि ॥१३५॥



धन्यासि नन्दिनि त्वं वै कृष्णकेलिपरा यतः।
तस्मिन्वहसि नितरां प्रेम त्रैलोक्यदुर्लभम् ॥१३६॥
कृष्णस्य विविधां केलिं परां गुह्यतरां सखि।
विपिनेऽपि गृहे भद्रे नहि जानाति कश्चन ॥३७॥
सरोवरे व्रजे भद्रे पद्मिनीबनमुत्तमम्।
गोपनारीगणरसं कृष्णो भुंक्तेऽत्र भृङ्गवत् ॥३८॥
य एतस्मिन्वहेद्रागं तस्माद्दूरतरो न हि।
पारावतो यथा रागात्पतत्याकाशचारकः ॥१३९॥

इति श्रीकृष्णकौतुके चन्द्रावलीप्रसंगो
नाम पञ्चमः सर्गः

—:—

## षष्ठः सर्गः

नन्दिनी—अपूर्वो भगवत्येष प्रसंगस्तु मया श्रुतः।
तव वक्त्राम्बुजात्सत्यं नहि जानाति कश्चन ॥१॥
इदमेव प्रजानन्ति सर्वगोकुलयोषितः।
अपि चन्द्रावली कृष्णं छलादन्वसरद्यथा ॥२॥
किं वर्णयामि धूर्त्तस्य वाक्यपाटबमद्भुतं।
स्वयं चन्द्रावली कृष्णसंनिधौ प्रकटाभवत् ॥३॥
धूर्त्तः प्रियवयस्यो हि कृष्णस्य नहि संशयः।
यस्मात्तस्य प्रियं कामं कुरुते यत्र तत्र च ॥४॥
बृन्दा—अयि नन्दिनि धूर्त्तोऽयं धूर्त्ता यद्वाक्यकौशलैः
दधिदानप्रसंगेने जितं यदयुवतीगणः ॥५॥
नन्दिनी—दधिदानविहारं वै वद देवि सविस्तरम्।
कथं कृष्णेन नीतं यद्दानं घोषवधूगणात् ॥६॥
न दृष्टा तु मया जातु गोपालानां वरस्त्रियः।
विक्रीणत्यः स्वगव्यानि कथं तद्दाने कारणम् ॥७॥

कोऽत्र सरति धेनूनामयुतं तु गृहे गृहे ।
तासां गव्येषु किं दृष्टि र्यद्व्रजोऽति समृद्धिमान् ॥८॥
तस्मान्कौतूहलं तन्मे श्रोतुमिच्छामि तत्वतः ।
गव्यदानं विहारं तत्कथयस्व यथाविधम् ॥९॥

बृन्दा--अयि नन्दिनि ! सत्यं वै कथं संभाव्यते व्रजे ।
दधिविक्रयकर्मैतद्गोपीनां हि किलाद्भुतम् ॥१०॥
याः स्वसौन्दर्य्यमाधुर्य्यैं र्लक्ष्मीं न गणयत्यपि ।
ताः कथं दधि नीत्वा तु विक्रीणन्ति गृहे गृहै ॥११॥

अत्रास्ति कारणं भद्रे शृणु मत्तो यथाविधम् ।
कथयामि च शुश्रूषासंयुतां त्वां च नन्दिनि ॥१२॥
कदाचिद्वसुदेवेन गोवर्द्धनसमीपतः ।
समारब्धः महान्सत्रः स्वपुत्रसुखहेतवे ॥१३॥
कदाचित्स्वेच्छया गर्गः संप्राप्तः स व्रजं सखि ।
दृष्ट्वा सोऽयं रामकृष्णौ समवापत्परां मुदम् ॥१४॥
स उक्तवान् व्रजे धर्मं कृष्णलीलाविनोदवित् ।
ऋषिस्त्रिकालतत्वज्ञः सर्वविद्याविशारदः ॥१५॥
या नारी निजगव्यानि स्वयमास्थाप्य मूर्द्धनि ।
यज्ञार्थं प्रापयत्वेवं सा सर्वार्थमवाप्नुयात् ॥१६ ।
एवमाकर्ण्यंताः सर्वाः श्रीकृष्णे वद्धसौहृदाः ।
कृष्णप्राप्तिर्भवेदेवं सर्वाभिर्हि विचारितम् ॥१७॥
मिषोऽयं परमः श्रेष्ठस्तत्पार्श्वे गमनं प्रति ।
धन्योऽयं च मुनिश्रेष्ठो गुरवो येन लोभिताः ॥१८॥
कृष्णोऽप्याकर्ण्य तद्भद्रे गर्गवाक्यमनिन्दितम् ।
सोल्लासं कौतुकारतो व्यमोदिष्टं तदा सखि ॥१९॥
एकदा प्रातरुत्थाय प्रियनर्मसुहृद्वृतः ।
गोवर्द्धनाद्रिवीथ्यंते तिष्ठति स्म स मोहनः ॥२०॥



तस्मिन्काले तु ताः सर्वा राधाद्याश्च व्रजांगनाः ।
सम्प्राप्तास्तत्र शिरसि वहन्त्यो दधि मद्घटीः ॥२१॥
यस्मिन्मार्गे च ताः सर्वा आगच्छन्ति यथेच्छया ।
गोपानां सुदृशो मूर्द्ध्नि बहन्त्यो दधि भाजनम् ।२२।
किं बर्णयामि तच्छोभामपूर्वां लोकदुर्ल्लभाम् ।
तासां गोपकिशोरीणां शृणु नन्दिनि तत्वतः ॥२३॥
हसन्ति स्म स्फुरद्वक्त्रा व्रजन्त्यस्ताश्च मन्थरं ।
चलन्नूपुरकांच्यश्च स्वेदमुख्यस्तु ताः सखि ॥२४॥

क्षणं व्रजन्ति ता मार्गे क्षणं स्थित्वा परस्परम् ।
भारान्संभावयंत्यो वै कुर्व्वन्ति व्यजनं पटैः ॥२५॥
लीलां गोकुलनाथस्य गायन्त्यः सुस्वरं यथा ।
स्वर्लोकस्य यथा देव्यो राजन्ते तेजसा क्षितौ ॥२६॥

तत्र किं सुकुमारांगी बर्णये राधिकां यथा ।
घटीभरभारा या सा पदं गन्तुं न शक्यते ॥२७॥
ललिता च विशाखा च द्वे च तत्पार्श्वके सखि !
गच्छतस्तन्सहायार्थं हसंत्यो च यथा तथा ॥२८॥
एवं हसन्त्यः क्रीडन्त्यः श्रेणीवद्धाश्च ताः सखि ।
प्राप्तास्तस्या स्तदा वीथ्या द्वारे ह्येकस्य निर्गमे ।२९।

तत्तद्धावर्ूनसदृंष्टास्ताः सर्वाश्च व्रजांगनाः ।
उत्कण्ठा बलितं प्रेम्णा श्रीकृष्णं समदर्शयत ॥३०॥
मुदितास्ते च गोपाला दृष्ट्वा ये कृष्णसंगिनः ।
प्राहुः परस्परमिति हरिष्यामो दधीनि वै ।३१।
इतिधूर्त्तश्च सम्प्राप्तो यत्र ता व्रजयोषितः ।
कृष्णस्य संमतस्तत्र प्रावोचच्च यथाविधम् ॥३२॥

धूर्त्तः—शृण्वन्तु वचनं यस्माद्वञ्चयित्वा बनेश्वरम् ।
अन्यत्रैव गताः सर्वाश्चौर्य्यलक्षणकोविदाः ॥३३॥

एतावदस्य नृपते दानद्रव्यमनेकशः ।
अभवत्तदिदानीं वै लब्धदेवप्रनोदितम् ॥३४॥
उक्तं च यदि चौरस्य चौर्य्यं सिध्यति नित्यदा ।
तथापि तत्प्रसंगेन सबद्धो भवति क्वचित् ॥३५॥
तस्माद् यथेच्छया दानमनिवेद्य वनेश्वरे ।
गताश्च यत्र तत्रैव कथं यास्यन्ति साम्प्रतम् ॥३६॥
वृन्दा—तत्र सर्वाश्च गोपालान्दृष्ट्वा कृष्णमुखान्सखि ।
कथमप्यत्र सकला वीथ्या द्वारेऽग्रतः स्थिताः ॥३७॥
पश्यन्ति खलु ताः कृष्णं राधाद्याः स्वच्छलात्ततः ।
स्वसखी पृष्ठतो भूत्वा लोभिन्यस्तन्मुखाम्बुजे ॥३८॥
धूर्त्तस्य वचनं श्रुत्वा ललिता प्राह तं सखि ।
उत्तरं च यथायोग्यमग्रे भूत्वा निरर्गलम् ॥३९॥
ललिता-किमत्र धूर्त्तो नितरां त्वं जल्पसि यथा तथा ।
किं दानं किमभिप्रायं किं ते वैभवमुच्यताम् ॥४०॥
यज्ञार्थं निजगव्यानि वयं सर्वा यथेच्छया ।
नयामः स्वस्वभवनादत्र किं तव वैभवम् ॥४१॥
धूर्त्तः—न पश्यसि त्वं ललिते गोविन्दोऽत्र वनेश्वरः ।
मंतिष्ठतेऽसौ स्वं यस्मान्मंशास्ति विपिनान्तरे ॥४२॥
ललिता—नाहं मीलितनेत्रा वै यस्माद्दर्शयसि स्फुटम् ।
मां त्वमात्मप्रभुं धूर्त्त तस्य जानामि चेष्टितम् ॥४३॥
नित्यं वने त्वसौ कृष्णो गोपालतनुजैर्वृतः ।
संचारयति गोवृन्दं यं वनेशं प्रजल्पसि ॥४४॥
धूर्त्तः—सत्यं तस्य च गोपालाश्चारयन्ति गवां गणम् ।
सनाथः सततं मुग्धे विपिनेषु विराजते ॥४५॥
ललिता—अपि चेदस्ति ते नाथो वनेनाथ विराजते ।
तस्मादस्मानलं किं त्वं विभीषयसि लम्पट ॥४६॥



नाहं भीरा त्वया यातु मोहिता स्वपराक्रमैः ।
ललिताहं तु सर्वज्ञा त्वां वै मोहयितुं क्षमा ॥४७॥
धूर्त्तः—ललिते किं प्रगल्भं त्वं प्रभाषसि यथा तथा ।
प्रभोरग्रे कथं कामं त्यक्तवेलेव गोपिके ॥४८॥
अस्या प्रतिहतादेशं सर्वे वै वनवासिनः ।
संधारयन्ति शिरसा विमत्र त्वं विशंकसे ॥४९॥
ललिता-मृगाश्च पक्षिणः सर्वे ये वसन्ति वने वने ।
युस्मन्संसगतस्तेषां जातः परिचयः परः ॥५०॥
दृश्यते तु गृहे त्रापि पालितं सारिकाशुकम् ।
तेऽपि तस्य प्रसंगेन वदन्ति च यथोचितम् ॥५१॥
साम्प्रतं किल दृश्यन्ते सततं संगवर्त्तिनः ।
कपिकेकिशुकन्यंकुसारिकाः यन्सुहृन्समाः ॥५२॥
कथं च मां मोहयितुं शक्तो धूर्त्तशिरोमणे !
यदहं सर्वविद्यायां निपुणा व्रजमण्डले ॥५३॥
धूर्त्तः—अयि मुग्धेऽथ किं राज्यं संभवत्यपि मायया ।
दोर्दण्डबलजन्यं हि राज्यं जगति संस्फुटम् ॥५४॥
ललिता-सत्यं वदसि धूर्त्त त्वं वनमागत्य नित्यदा ।
यत्त्रासयसि दोर्दण्डैः सर्वानेतान्वनौकसः ॥५५॥
तस्माच्च त्रासितास्ते वै सर्वे तु वनवासिनः ।
युष्मच्छिक्षां समाधाय गदन्ति च यथा तथा ॥५६॥
नाहं त्रासयितुं शक्या निर्भया तु यथेच्छया ।
विचराम्यत्र सततं स्वबलेनापि दर्पिता ॥५७॥
धूर्त्तः—किं बलं ते वने मुग्धे प्रसिद्धा गृहिणी बत ।
स्त्री गृहे स्वबलं कामं सम्भावय यथाविधम् ॥५८॥
वयं तु सर्वे गोपाला गोविन्दानुचरा यतः ।
तद्भुजाभ्यां प्रगुप्ता वै त्वां च रोधयितुं क्षमाः ॥५९॥

युष्माकं च क्षणेनैव दधिभाण्डानि सर्वतः ।
लुम्पयामो निर्बलानां पश्यन्तीनां च तत्कथं ॥६०॥
तद्युक्तं ललिते यस्मात्स्वयमस्य नृपस्य वै ।
दानं च दीयतां सर्वं कस्मात्संस्पर्द्धयस्यलम् ॥६१॥

ललिता—लुम्पयिष्यसि रे धूर्त्त कथं दधिघटीं बने ।
किं वयं किल खंजायन्त्वां ग्रहीतुं न शक्नुमः ॥६२॥
युस्माकं चैव सर्वेषां वासोऽलंकारानि च ।
तदा गृन्हाम्यहं सद्यो यदि त्वं दधि पश्यसि ॥६३॥

बृन्दा—अनन्तरं भीमवीर्य्यो वृक्षमारुह्य तत्क्षणात् ।
अहरत्स्वच्छलेनैव ललितादधिभाजनम् ॥६४॥
तस्याः संवीक्षमाणायाः सगर्व्यं निजवानगन् ।
अददन्सहसा तत्र स चाखादद्यथेच्छया ॥६५॥

हसन्ति स्म च गोपाला धूर्त्तमुख्यास्तदा सखि !
प्रशंसंतश्च तं कामं वलिनं वानरोत्तमम् ॥६६॥
व्रजवध्वस्तदा सर्वा वीक्षमाणाः परस्परम् ।
केनापहृतमस्या वै दधि मूर्द्धिन स्थितं किल ॥६७॥

ललिता लज्जया युक्ता विलोक्य च कपेर्वलम् ।
धार्ष्ट्यं समवधार्य्याथ समवादीत्सतर्जनम् ॥६८॥
त्यज धूर्त्त स्वधूर्त्तत्वं नहि जानासि मां किल ।
प्रगृह्य त्वां शिखाभ्यां तु खण्डयिष्ये रदांस्तव ॥६९॥
गोपमण्डलमुल्लंघ्य कामं हससि मां कुतः ।
वंचकस्य गुणग्राहो पत्थानं किं ग्रहिष्यति ॥७०॥
न भूतं तु कदाचिद्वा दधिदानमपूर्वकम् ।
किं प्रसंगं समाधाय याचसे दानमद्भुतम् ॥७१॥

धूर्त्तः—तव मूर्द्धनिस्थिता यस्मात्कलशी स्वर्णनिर्मिता ।
गृहीता ललिते तत्किं पुनर्वक्तुं प्रवांछसि ॥७२॥



यदिमा गोपसुदृशो दधि-दाने नृपस्य नः ।
कृष्णस्य च नन्दयितुमासां पश्यामि हृद्गतम् ॥७३॥
त्वया तु स्वबलेनैव प्रचण्डं राजशासनम् ।
उल्लंघ्य तस्य भागो वै रक्षते ललिते कथम् ॥७४॥

ललिता—मया न ज्ञायते सम्यक् किं बदस्यपि धूर्त्तक ।
मुहुर्मुहुरिदं दानं राज्ञो देहीति सत्वरम् ॥७५॥
को राजा किं च दानो वै मां बदस्व यथाविधि ।
यथाहं च बधूचक्रं प्रेरयामि च तत्कृते ॥७६॥

धूर्त्तः—गोविन्द इतिविख्यातो राजा बृन्दाबनेश्वरः ।
तस्याज्ञावशगा भद्रे द्वादशारण्यवासिनः ॥७७॥
तस्मिन्वने तु सततं युष्माकं धेनुपंक्तयः ।
चरन्ति सुखिताः कामं तृणं कामदुघा इव ॥७८॥

तस्माद्युक्तश्च राजासौ तत्प्रसंगेन नित्यदा ।
करोमि सकला क्रियां धेनूनां दुग्धबृद्धये ॥७९॥
नाहं कदाप्ययुक्तं वै बदामि ललिते यतः ।
राजादेशे वर्त्तितव्यं प्रियं कांक्षद्भिरुत्तमं ॥८०॥

बृन्दा—इति तस्य वचः श्रुत्वा स्मित्वा प्राह तदा सखि !
ललिता चोत्तरं धूर्त्तं स्वसखीमानतत्परा ॥८१॥

ललिता—किं जानासि त्वं भो धूर्त्त यदेषा लोकपूजिता ।
बृन्दाबनेश्वरी राधाभिषिक्ता या स्वयंभुवा ॥८२॥
साविञ्या तत्कथं तस्या राज्यमाछाद्य पाणिना ।
स्वयं राजा भवेद्धूर्त्त त्वत्प्रेष्ठो वै बनेश्वरः ॥८३॥
तद्युक्तमस्याश्च वने भागो भवति सत्वरम् ।
दातव्यः स च युष्माभिर्यद्गाश्चारयथ स्वयम् ॥८४॥

न तु युक्तं प्रजा धूर्त्त करं कांक्षति राजतः ।
अयं हि स्वछलोपायो न कर्त्तव्यो ममाग्रतः ॥८५॥

वृन्दा—इति धूर्त्तस्तदा श्रुत्वा ललितावाक्यपाटवम् ।
प्रहस्य पुनरादेहं यथायोग्यं हि नन्दिनि ॥८६॥
धूर्त्तः--त्वया यदेतल्ललिते यथाविधि विचारितम् ।
किमत्र चित्रं यद्राधा त्वया शब्देन वर्णिता ॥८७॥

सत्यं तदा तु सा राधा वृन्दावनवनेश्वरी ।
वयं तस्या निदेशं वै मूर्द्धिन सर्वे वहामः तत् ॥८८॥
वृन्दा—धूर्त्तस्य वचनं तत्र श्रुतं कृष्णेन नन्दिनि ।
संप्राप्तश्चैतया यस्या सशोभकरपंकजः ॥८६॥

कृष्णस्तु ललितां प्राह वाक्यपाटवकोविदः ।
राधायां दत्तनेत्रान्तः किशोरीकुलमोहनः ॥६०॥

ललिते किं वदत्येष धूर्त्तो धूर्त्तशिरोमणिः ।
मयापि तच्छ्रुतं दूरात्किं त्वयैवं प्रभाषितम् ॥६१॥
ललिता-तावका बक्तृतत्वज्ञाः कृष्णचन्द्र वयं यतः ।
शुद्धाः शुद्धं वदामोऽत्र यथोचितमनिन्दितुम् ॥६२॥
धूर्त्तः—न हि मिथ्यां वदत्येषा ललिता सत्यवादिनी ।
विपत्राः शिशिरे वृक्षा अभूवन्ननृतात्क्वचित् ॥६३॥
कृष्णः--मामेवं वद वै धूर्त्त ललितां सत्यवादिनीम् ।
यातु सत्यस्वभावेन दानं दातुं समागता ॥६४॥
ललिता-शैशवे नितरां नूनं चोरयित्वा गृहे गृहे ।
गव्यानि भक्षितान्यंग नैव त्यजसि तद्गुणम् ॥६५॥
ये स्वादलम्पटाः केचित्तद्वद्धृदया यतः ।
येन केनाप्युपायेन तद्गुणं पोषयन्ति ते ॥६६॥
नोचितं त्वयि गोविन्द मार्गरोधक्रिया यतः ।
सर्वा गोपकुमार्य्यो वै सीदंति पुरतः स्थिताः ॥६७॥
वृन्दा--राधा प्राह तदा मन्दं विशाखायाः श्रुते सखि ।
तथापि हरिणा दृष्टा वदंती किं च तत्क्षणात् ॥६८॥



अवधार्य्य च राधाया गदितं शृणु नन्दिनि !
ललितां तु तदा प्राह तिर्यग्भूत्वा विशंकिता ॥६६॥
विशाखा-ललिते किं त्वया कामं वाक्यदामप्रवर्द्धितम् ।
यदि जातोऽपराह्नो वै किं वदिष्यति कीर्त्तिदा ॥१००॥

नन्दात्मजोऽयं नितरां दधिलुब्धोऽस्त्यसंशयम् ।
गन्तव्यं दधि तत्किञ्चिद्दत्वा यत्र महामखः ॥१॥
कृष्णः--राधया शिक्षिता त्वं वै विशाखे वदसीदृशं ।
नाहं तु दधिलुब्धो यद्राधालुब्धः सदैव च ॥२॥

वृन्दा--इति राधा कृष्णवाक्यं श्रुत्वा तु नतकंधरा ।
लज्जिता सा ह्रिया तन्वी विशाखां समतर्जयत् ॥३॥
विशाखा-किं न जानासि राधायां ते रुचिं नन्दनन्दन !
दध्ना वै नवनीतेषु यन्मया लोकितं पुरा ॥४॥

न युक्तं तस्य व्याख्याने यद् प्रकटं भविष्यति ।
तस्माद्यद् याचसे कामं गृहाण दधिनिर्मलम् ॥५॥
धूर्त्तः--किं लोभयसि दध्नैव विशाखे गोकुलेश्वरम् ।
तद्दानस्येह का संख्या युष्माभिर्यच्च चोरितम् ॥६॥
कृष्णः—गणना तस्य दानस्य क्रियतां बत सत्वरं ।
यदहं निखिलं दानं गृन्हामीह यथेच्छया ॥७॥

वृन्दा--मधुमङ्गल आयातो लेखनी कर्णभूषणः ।
कदलीदलमादाय दानसंख्यां च सोऽकरोत् ॥८॥
मधुमंगलः-किं शतं किं सहस्रं वै किं लक्षं कोटिरेव च ।
अर्बुदं वाप्यहो दानमसंख्यं परिवर्द्धितम् ॥६॥
वृन्दा – निवेदिता तदा तेन दानस्यासंख्यता हरौ ।
गृहाण स्वेच्छया नाथ तद्द्रव्यं तु वनेश्वर ॥१०॥
कृष्णः----त्वया श्रुतं विशाखे यद्दानसंख्यातिलंघिता ।
तस्माद् किं वा त्वया वाचं दातव्यं तद्वदस्व मे ॥११॥

बिशाखा-किं वा वदाम्यहं कृष्ण न दृष्टं न श्रुतं मया ।
अमितं यद्धदत्येष लुब्धकं चित्रनिर्मितम् ॥११२॥
धूर्तः---सत्यं वदति वै नाथ विशाखा सत्यवादिनी ।
अस्मिन्संगे न दृश्यन्ते सुबहूनि धनानि च ॥११३॥
तस्माद् यत्किञ्चिदासां वै शरीरे भूषणादिकं ।
गृहाण गोपराज त्वं क्षम्यतामागसां च यः ॥११४॥
मधुमंगलः-त्वं हि मूर्खो न जानासि किं मर्य्यादं धनं यतः ।
किमासां भूषणैः क्षुद्रैर्लोभयेथा ब्रजेश्वरम् ॥११५॥
बिशाखा-स्वामिन्भवान् हि नितरां न जानाति यथाबिधि ।
पायसस्य तु ग्रासानां गणना ब्रजमण्डले ॥११६॥
अमूल्यभूषणं दिव्यं राधायाः कंठमण्डितम् ।
द्रष्टुं न शक्यते कैश्चित्त्रैलोक्येऽपि कदाचन ॥११७॥
मधुमंगलः-धन्यासि हे बिशाखे त्वं स्मारितं पायसं तु मे ।
निमन्त्रितोऽहं यद्राज्ञा तस्माद् यामि लघु ध्रुवं ॥११८॥
अपि पायय मां भद्रे नाहं द्रवपरो यत. ।
दधिमिष्टं यथेच्छं वै सर्वे ते दधिलुब्धकाः ॥११९॥
बृन्दा--ललिता तु घटीं ताबद्रिक्तामानीय तत्र तं ।
अपाययद् याचमानं सर्वास्ताः प्राहसन् स्तदा ॥१२०॥
धूर्तः--पण्डितोपि यदेषोऽत्र वंचितो मुग्धयानया ।
दधिपानप्रलोभेण स्वयं लाघवमागतः ॥१२१॥
मधु०---ललिते यत्त्वया कर्म कृतं तल्ललितं यत. ।
कथं गमिष्यसि गृहं मामबञ्चाय तद्वद ॥१२२॥
त्वं गृहाण यथाकामं कृष्णचन्द्र निरर्गलं ।
आसां घटीश्च यत्किंचिद्भूषणान्यपि सत्वरम् ॥१२३॥
भूयो राधा बिशाखायाः कर्णे स्म लगति क्षणं ।
उक्तं चैतदयं कामं बञ्चितोऽभूत्तदा सखि ॥१२४॥



पाययस्व दधि क्षिप्रमुत्तार्य्यैव घटीं स्वकाम् ।
यदेष ब्राह्मणः शुद्धो हसितो ललिताख्यया ॥१२५॥
बिशाखा-स्वामिन्नहं च स्वदधि पाययामि यथेच्छया ।
पिब सर्वज्ञ मधुरं मुग्धया वंचितो यतः ॥१२६॥
मधु०---अयि धूर्त्ते विशाखे त्वमपि मां वंचयस्यलं ।
यदहं साम्प्रतं कामं शिक्षितो भूरिकैतवो ॥१२७॥
विशाखा--गोभ्यः शपे त्वहं ब्रह्मन् किंचिद् जिह्मं न मे मनः ।
स्वयं गृहीत्वा वा गव्यं पिब नात्र कुतूहलम् ॥१२८॥
बृन्दा--इति तस्याः कराम्नीत्वा कलसीं दधिपूरिताम् ।
अपिवद्दधि संश्लाध्य विशाखां मधुमङ्गलः ॥१२९॥
कृष्णं प्राह तदा भद्रे यथेच्छं मधुमङ्गलः ।
चित्तज्ञस्तस्य कृष्णस्य दध्ना संतृप्तमानसः ॥१३०॥
मधु०—विशाखा सत्यसंयुक्ता ललिता दम्भनिर्भरा ।
तस्माद्विशाखां त्वं नाथ साधयस्व स्वजल्पनैः ॥१३१॥
कृष्णः—सत्यमुक्तं त्वया प्रेष्ठ ! यया संपूरितं तव ।
शून्योदर दरीतां त्वं प्रशंससि यथेच्छया ॥१३२॥
विशाखा यदि मे दानं निखिलं दापयिष्यति ।
सत्यं वादवतीमृतां मंस्येहं मधुमंगल ! ॥१३३॥
यत्त्वया दाननिर्मुक्तिः क्रियते च विशाखिके !
देहि राधाधरस्यालि सुधां मे जगदुत्तराम् ॥१३४॥
बृन्दा—इति सख्यौ हरेर्वाक्यमवधार्य्य परस्परम् ।
हसंत्यौ किल पश्यंत्यौ किमाकांक्षति मोहनः ॥१३५॥
बिशाखा-राधे त्वां नन्दतनुजो याचते बिनयान्वितः ।
तव दाने यतः सर्वा मोदयते स्म ब्रजांगनाः ॥१३६॥
राधा—त्वमेब याचते कृष्णो विद्यासु सकलासु यत् ।
निपुणा मां कथं वैष स्पृहयिष्यत्यकोविदां ॥१३७॥

वृन्दा—इत्युक्त्वा स्म तदा राधा प्रसर्पति च पृष्ठतः ।
ह्रिया स्म सभया तन्वी पटे निवृण्वती मुखम् ॥३८॥
संज्ञया प्रावदत्कृष्णं विशाखालक्ष्य हृद्गतम् ।
तावद्दधि वटीं सर्वे लुम्पति स्म सगोपकाः ॥३९॥
भक्षयंतो दधि प्रायो यथेच्छं शृणु नन्दिनि ! ।
विशाखां श्लाघयंतो वै परां मुदमवाप्नुवन् ॥४०॥
तत्र राधादधि तदा सुबलः कृष्णसंनिधौ ।
आनीय तद्विनोदेन तदभक्षयच्चादरान् ॥४१॥
राधामानंदय बचनै र्विचित्रैः शृणु नन्दिनि ! ।
स्वयं निजसुहृद्युक्तस्ततोऽगाद्विपिनं हरिः ॥४२॥
गोदोहनस्य काले तु पुरस्कृत्य गवां गणं ।
निजगोपालवलितः प्राप्तस्तद्गोकुलं हरिः ॥४३॥
एवं कृष्णेन नितरां राधाकौतुकशालिना ।
दधिदानविहारो वै कृतश्च परमाद्भुतः ॥४४॥
कृष्णस्य वै वयस्यानां तत्सखीनां च नन्दिनि ! ।
कौशलं चैव तत्सर्वं वर्णितं तु मया सखि ! ॥४५॥
अत्यानन्दप्रदां भद्रे दानकेलिं मनोरमाम् ।
शृणोति श्रद्धया युक्तस्तस्य तस्मिन्भवेद्रतिः ॥४६॥

इति श्रीकृष्णकौतुके दधिदानविहारो
नाम षष्ठः सर्गः

-:०:❀:०:-

## ❀ सप्तमः सर्गः ❀

नन्दिनी—श्रुतो दानविहारो वै मया देव्यतिदुर्लभः ।
तत्रापि कौशलं कामं हरेरनुचरस्य हि ॥१॥
अपि राधासखीनां वै वर्णयाम्यद्भुतं तु किम् ।
वैचित्री च यतो वाक्यैर्मोहितो नन्दनन्दनः ॥२॥



साम्प्रतं श्रोतुमिच्छामि लीलां लोकेषु दुर्लभाम् ।
भवने राधिकायास्तु संगमोऽभूत्कथं हरेः ॥३॥
एनं प्रसङ्गं सुखदं वद देवि ! यथा विधि ।
कौतूहलप्रदं यस्मान्नहि जानाति कश्चन ॥४॥
वृन्दा—शृणु नन्दिनि ! सर्वं त्वं चरितं जगदुत्तरम् ।
राधामाधवयोर्भद्रे छलेनैव कृतं गृहे ॥५॥
क्वचिद्धेमन्तसमये शीतवीतदिगन्तरे ।
मंदते ज्योतिमान्यर्कौ निशाकरबलोदयः ॥६॥
न त्यजंति विहंगा यन्नीडं योषित्सुसंयुताः ।
तुषारवंधकाद्भीता लीना कूजंति तत्र हि ॥७॥
बने मृगगणाः कामं शीतवायुभयातुराः ।
मृगीदेहेन संश्लिष्टा नयन्ति हिमवासरान् ॥८॥
किं वर्णयामि तेषां वै ये प्रिया रहिताः सखि ! ।
तस्मिन्काले तु दुर्द्धर्षे तुषारनृपभाविते ॥९॥
स राजा हिमतेजा वै लोकं शास्ति स्वतेजसा ।
नारीदुर्गं समाश्रित्य वसन्ति सुखिनो नराः ॥१०॥
मनः स्पृहयते वासो दहनं ज्वलितेन्धनम् ।
निर्वातभवनं चापि तस्मिन्हिमसमागमे ॥११॥
तिष्ठन्ति कामिनः कान्तामाश्लिष्य च भुजान्तरे ।
ताम्बूलपूर्णवदना निर्वातभवनेष्ववः ॥१२॥
तस्मिन्काले गवां वृन्दं चारयन्विपिने हरिः ।
कौतूहलपरो गोपानिदमाह तदा सखिम् ॥१३॥
शृण्वन्तु भो वयस्या वै क्रियतां वचनं मम ।
मदद्दप्तवलीवर्दान्योधयध्वं यथा तथा ॥१४॥
वृन्दा—एवमादिश्यमानास्ते गोपाः कृष्णपरायणाः ।
तीक्ष्णशृंगौ महामत्तौ वृषावायोधयंस्ततः ॥१५॥

युद्धतोस्तु ततस्तत्र वृषयोः कोप्यपूर्वकः ।
आससाद वृषो मध्ये महामदविदर्पितः ॥१६॥
तेन तौ वलितौ युद्धाद्यथागात्कृष्णसम्मुखम् ।
उग्रश्रृंगो महीं क्रोधादुल्लिखंश्च नदत् खलः ॥१७॥

कृष्णेनैतच्च विज्ञातं दैत्योऽयं वृषरूपधृक् ।
तत्कालं हि तदा भद्रे सर्वज्ञेन यथाविधि ॥१८॥
तस्य श्रृंगौ स्वपाणिभ्यां प्रगृह्य धरणीतले ।
अपातयत्तत्र कृष्णस्तं बलेन महासुरम् ॥१९॥

म्रियमाणः स्वजिह्वं तत्त्यक्त्वाभूदसुरस्तदा ।
प्रास्तुवंस्तत्र गोपाला अवर्षन्कुसुमैः सुराः ॥२०॥
तस्मिन्काले हि तोकस्तु कृष्णस्यातिसुविक्रमम् ।
दृष्ट्वा गतस्तदा शीघ्रं यशोदा निकटे सखि ॥२१॥

प्राह तां वत्सलां देवीं यशोदां स भयान्वितः ।
अतिवीर्य्यं समालोक्य स्वयं तोकः स्वभावतः ॥२२॥

तोकः--अम्बाद्य कुशलं काममभत्कृष्णस्य वै वने ।
बृषवेषधरो दैत्यो नीतः कृष्णेन संक्षयम् ॥२३॥

यशोदा--वृषरूपी कुतो वत्स दैत्यः प्राप्तश्च तत्र हि ।
कथं स क्षयमापन्नः कारणं वद मां प्रति ॥२४॥

तोकः--मातः कृष्णेन कुतुकाद्योधितो चोन्मदौ वृषौ ।
तत्सम्बन्धाच्च तद्रूपं धृत्वागादसुरः खलः ॥२५॥
स क्रोधाच्च हरिं स्पष्टुं सम्मुखोऽभूच्च तत्क्षणे ।
तदा कृष्णेन तच्छृंगौ धृत्वा संपातितो भुवि ॥२६॥
म्रियमाणोऽसुरो भूत्वा त्यजत्प्राणान्स तत्र हि ।
अहं च तद्रूपं दृष्ट्वा संप्राप्तश्च व्रजे यतः ॥२७॥
राधाद्याभिश्च दृष्टं तद्यथाभूतं व्रजेश्वरि ।
नीत्वा यांतोभिरिज्यायै निजगव्यानि मूर्द्धभिः ॥२८॥



वृन्दा—यशोदातिभयं श्रुत्वा परं विस्मयमागता ।
अवोचद्रागिणीं प्रेम्णा वृत्तान्तं तद्यथाविधि ॥२९॥

यशोदा—त्वया वन गतं तत्र भोज्यं प्रापयितुं वनं ।
नोक्तो हि मां कथं मुग्धे ! सं गो भयविवर्द्धनः ॥

रागिणी--न दृष्टं न श्रुतं देवि मयैवेतद्विपर्ययम् ।
न जाने किं वदत्येष वालिशस्तुच्छधीर्यत् ॥३१॥

बृन्दा--एतावता हरिस्तत्र सम्प्राप्तः स्वसुहृद्वृतः ।
वन्यवेषेण शोभाढ्यो गोरेणुधृतकुन्तलः ॥३२॥

समालोक्य समायातं यशोदा पुत्रवत्सला ।
कृष्णं पयोदसंकाशं विद्युत्पिंगवरांवरम् ॥३३॥
समाधाय च हृद्देशे चुम्बंती वदनं मुहुः ।
अवदन्करुणापूर्णा गोविन्दं भुवनेश्वरम् ॥३४॥

किं मे त्वं वार्द्धक्ये वत्स भयं वर्द्धयसे खलु ।
यद्गौ यथेच्छयारण्ये धवलान्योधयस्यपि ॥३५॥
तेषां युद्धच्छलाद्यस्मान्मायिनोऽसुरदाम्भिकाः ।
आगच्छन्ति दुरात्मानस्तेऽपि यान्ति क्षयं स्वयम् ॥३६॥
यतो मयि विधातानुकूलः केनापि हेतुना ।
समागच्छंति दुर्भावाः स्वयं विंदन्ति तद्गुणम् ॥३७॥

कृष्णः—प्रमादात्तावनड्वाहौ न्ययुन्मातां ते सुदर्पितौ ।
तत्र कोप्यागतो मातर्वृषभो मम सम्मुखः ॥३८॥
अंजसा तस्य श्रृङ्गौ द्वौ मम हस्तगतौ ततः ।
गृह्यमाणः स्वयं सद्यो न्यपतद्धरणीतले ॥३९॥

यशोदा--गच्छ रागिणि शीघ्रं त्वं कीर्त्तिदाया गृहे ततः ।
पृष्ट्वा च राधिकां सर्वं पुनरागच्छ चात्र हि ॥४०॥
रागिणी सहसा तस्मादगमत्विनयान्विता ।
यशोदया प्रेषिता वै कीर्त्तिदायाश्च पार्श्वके ॥४१॥

तस्मिन्काले तु कृष्णोऽपि वहिरागाद्गृहात्सखि ।
संगे गन्तुं च रागिण्याः श्रोतुं राधामुखेरितम् ॥४२॥
पुंरूपेण हि तद्गेहे गन्तुं शक्तो न कोऽपि वै ।
रागिण्याः संमतस्तस्मात्सोधार्षीदंगनाछलं ॥४३॥
ततस्तत्संगसंयुक्ता रागिणी कृष्णतत्परा ।
संप्राप्ता कीर्त्तिदाया वै पाश्वर्कं निशि नन्दिनि ॥४४॥
नतस्कृत्य च तां कामं विनयानतकंधरा ।
विलोक्य राधिकां तत्र अवापत्परमां मुदम् ॥४५॥
कीर्त्तिदा-अकांडे त्वं कथं भद्रे प्राप्तासि वद सत्वरम् ।
कुशलं वर्त्तते राज्ञ्या यशोदायाश्च रागिणि ॥४६॥
रागिणी-कुशलाः सन्ति सर्वे वै कृपया तब चानघे ।
इदानी प्रेषिता राज्या प्रष्टुं राधां किमप्यहं ॥४७॥
वनादागत्य तोकेन प्रोक्तं किञ्चिद्धयं यतः ।
वृषासुरप्रसंगो वै तस्मादस्मि प्रनोदिता ॥४८॥
कीर्त्तिदा-किं वत्से त्वं प्रजानासि वृत्तमेतत्महाद्भुतम्।
कथयस्व यथाभूतं यतः पृच्छति रागिणी ॥४९॥
राधा—अम्बाहं ब्रजनारीणां संगे यज्ञवाटके ।
अपश्यं तत्र गच्छंती वृषासुरवधाद्भुतम् ॥५०॥
नन्दपुत्रेण कुतुकाद् योधितौ स्ववृषौ ततः ।
वृषरूपी खलस्तं यद्धावितः समगात्क्षयम् ॥५१॥
कीर्त्तिदा-अहो अत्यद्भुतं भाग्यं यशोदानन्दयो व्रंजे ।
ये समायांति दुर्बुद्धया स्वयं यान्ति क्षयं यतः ॥५२॥
अपि केनाप्युपायेन वार्द्धके तनयोऽद्भुतः ।
प्राप्तस्तौ तु ततस्तस्य गोप्ता साक्षाद्धरिः स्वयम् ॥५३॥
तस्मादवश्यमेवं वै कर्त्तव्यश्च महोत्सवः ।
दानं च देवि विप्रेभ्यः पुत्रकल्याणहेतवे ॥५४॥



वृन्दा—एवमाश्वासिता कामं रागिणी राधिकाम्बया ।
शीघ्रं समुत्थिता गन्तुं स्वगृहं प्रति नन्दिनि ! ॥५५॥
रागिणी—श्रुतो देवि ! प्रसंगोऽयं यथार्थं राधिकामुखात् ।
ब्रजेश्वरीं वदाम्येतद्वीक्षमाणां स्रुतिं मम ॥५६॥
कीर्त्तिदा-अति रात्रेर्गतो भद्रे कथं यास्यसि वेश्मनि ।
अत्रैव तिष्ठ मे पार्श्वे न रात्रौ गमनं वरम् ॥५७॥
इयं का तव संगे वै प्रश्रया नमितानना ।
न च किञ्चिद्वदत्यत्र प्रेक्षते शंकितेक्षणा ॥५८॥
रागिणी-इयं मे भगिनी देवि! श्यामा नामा कनीयसी ।
नित्यमाकांक्षते गेहे द्रष्टुं राधामुखाम्बुजम् ॥५९॥
न कदाचिन्मया प्राप्तोऽवसरो गृहकार्य्यतः ।
संग आदाय राधायाः पार्श्वे संप्रापयाम्यम् ॥६०॥
इदं संकेतमासाद्य मम संगे समागता ।
दृष्टा च राधिका साध्वी सखीकेलिपरायणा ॥६१॥
कीर्तिदा-वत्से कस्मादलं त्वं च लज्जसे तु यथेच्छया ।
नित्यमागत्य राधायां सख्यं वर्द्धय नंदिता ॥६२॥
वत्से राधे प्रगच्छैनां भवनं भुवनोत्तरम् ।
सन्दर्शय यथेच्छं त्वं बिशुद्धां स्वपरायणाम् ॥६३॥
रागिणी मम सांनिध्ये बर्त्तते शुभभाषिणी ।
त्वमेनां च सखीभावैः संपूजय यथाविधि ॥६४॥
वृन्दा—इति राधा समादाय तां सखीं व्याजरूपिणीम् ।
अदर्शयत् स्वभवनं दुर्दर्शं नरमात्रतः ॥६५॥
किं बर्णयामि तच्छोभां शृणु नन्दिनि तत्वतः ।
रचितं स्वर्णपत्रैश्च दीपितं दर्पणात्परम् ॥६६॥
नानामणिगणैर्युक्तं गवाक्षैः परिरञ्जितम् ।
कृत्रिमैः पक्षिनिकरैः परितः परिमण्डितम् ॥६७॥

स्वर्णपट्टबितानं च मुक्ताफलविलम्बकं ।
नानाबिधसुगन्धैश्च धूपितं तद्गृहान्तरम् ॥६८॥
प्रदीपावलिभिः कामं द्योतमानं यथा दिवि ।
चित्रितं बिबिधैश्चित्रै परितः परिशोभितम् ॥६९॥
तदद्भुतं तदा भद्रे विलोक्य नवमन्दिरम् ।
नारीवेषधरा तत्र परं विस्मयमागता ॥७०॥
मृदुलास्तरणान्येव भूमौ तत्र यथासुखम् ।
उपवेश्य शनैस्तत्र प्रीत्या पश्यति तन्मुखम् ॥७१॥
ताम्बूलबीटिकाभिश्च कुंदस्रग्भिश्च चंदनैः ।
सानुरागसुवाक्यैश्च सा पूजयत तां सखि ॥७२॥
न ज्ञातं तस्य कपटं कृष्णस्य परमाद्भुतम् ।
निःशीतसदने भद्रे अकार्षीत्परमादरम् ॥७३॥
वृन्दा—तावत्कृष्णेन गुणोऽयं धैर्य्येणाच्छादितः सखि ।
न सज्जितं धनुर्यावन्मकरध्वजभूभुजा ॥७४॥
तद्वशत्वेन राधाया अगृहात् करपल्लवम् ।
लीलया शनकैस्तत्र नारीवेशधरो हरिः ॥७५॥
तत्करस्पर्शमात्रेण चकिता कृष्णसम्मुखं ।
प्रपश्यंती तदा राधा प्राह तां कपटांगनाम् ॥७६॥
राधा—श्यामे तव करः कामं पौरुषं वहते गुणम् ।
यस्मात्तस्य च संस्पर्शात्कंपतेऽंगलता हि मे ॥७७॥
अपि ते नेत्रयुगलं साभिलाषं तथैव हि ।
मुहुः पश्यसि मे हारं हृद्देशे च विलम्बितम् ॥७८॥
वृन्दा—तावत्प्रहस्य सहसा राधामाधाय वाहुषु ।
अपश्यत्तन्मुखं प्रेम्णा लीलावेशधरो हरिः ॥७९॥
कृष्णः—त्वयापि विस्मृतं यस्माद् दृष्टा मे रूपमद्भुतम् ।
किं तत्र कीर्त्तिदाया वै विस्मये सुकुतूहलम् ॥८०॥



वृन्दा—ततः सुमधुरालापैः परस्परं मनोहरैः ।
हसन्तौ हासयंतौ च मिथो मुदामवापताम् ॥८१॥
तदा तौ स्वर्णपर्य्यंके तूलिकामृदुलाञ्चिते ।
आसीनौ तत्र तौ भद्रे रागेण यन्त्रिताशयौ ॥८२॥
तदा चाटुसुवाक्यैश्च कुर्व्वल्लीलां मनोजजाम् ।
अरंस्त नन्दतनुजं स्तद्गृहे केलितत्परः ॥८३॥
काममानंद्य दयितां समुत्थाय तदन्तिकात् ।
रागिणीमेत्य बानम्य कीर्त्तिदामागमद्गृहं ॥८४॥
एवं राधां च तद्गेहे छलेन किल नंदिनि ! ।
अरीरमत्तां गोबिन्दो वञ्चयन्नथ तद्गुरून् ॥८५॥
तदा सा रागिणी प्रातः संप्राप्ता यत्र संस्थिता ।
यशोदा पदवीं तस्या वीक्षमाणा निशामुखात् ॥८६॥
उक्तं च तां यथा राधा न्यधात्कृष्णचेष्टितं ।
यशोदा राधिकावाक्यै विश्रब्धाभूच्च नन्दिनि ! ॥८७॥
नित्यं सत्यपरा साध्वी राधा चारुप्रभाषिणी ।
यया तु गदितं सत्यं मम विश्रम्भहेतवे ॥८८
आहूय ब्राह्मणान् शुद्धान् गोहिरण्यं यथाविधि ।
अदापयत्सा तत्काले क्षेमाय तनुजस्य वै ॥८९॥
सा कृष्णं विविधैर्वाक्यैः शिक्षारूपेण नन्दिनि ! ।
उदीर्य्य भोजयित्वा च प्रेषयत्कानने तदा ॥९०॥
इति त्वां सर्ववृत्तान्तमुक्तं हेमन्तवर्णनम् ।
यथासौ स्वच्छलात्कृष्णोऽरंस्त गेहेऽपि राधया॥९१॥

इति राधालयबिहारः

नन्दिनी—श्रुतं देवि ममा चित्रं चरितं त्वन्मुखोदितम् ।
कृष्णो यथाच्छलेनैवारमयद्राधिकां गृहे ॥१॥
कदाचिन्स्वगृहेप्यार्य्ये सा राधा लोकदुर्लभा ।
कृष्णेन वा निजोपायैरानीता तद् यथा वद ॥२॥

वृन्दा—एकदा शिशिरे कृष्णः सुहृन्मण्डलमण्डितः ।
अचारयत्स गो वृन्दं संप्राप्तो विपिने सखि ॥३॥
ऋतौ यस्मिंश्च शीतार्त्ताः सर्वे स्थावरजंगमाः ।
स्वं न धत्तुं शक्नुवन्ति तस्य वीर्य्यं वदामि किं ॥४॥

प्रचण्डः पवनो यत्र तुषारानुचरोपमः ।
सं शास्ति तु यथालोकं तेजसा स्वपतेर्यतः ॥५॥
विहंगास्तद्भयापन्ना व्योमगंतुमलं नहि ।
उत्पतन्ति स्ववीर्य्येण पतन्त्यपि महीतले ॥६॥

विह्लाश्च कृताः सर्वे शाखिनो बलदर्पिताः ।
कम्पन्ते तद्भयेनैव रोमोद्गमभरान्विताः ॥७॥
स्वैरिण्य इव दृश्यन्ते ताः साध्व्योऽपि वरस्त्रियः ।
तत्तीव्रस्पर्शदोषेण व्रणवत्योऽधरे यतः ।८॥

कृष्णोऽपि तस्मिन्काले वै सुरभीसंघसंवृतः ।
श्रीमद्वृन्दारण्ये रम्ये सर्वर्त्तु सुखदेऽचरन ॥९॥
काशते यत्र नितरां लवंगलतिका सखि ।
याचका इव याचंते मधु यस्मिन्मधुव्रताः ॥१०॥

ततः प्रदोषसमये सुहृत्संदोहसंयुतः ।
संप्राप्तः स्वव्रजं कृष्णः पीताम्बरपरिस्कृतः ॥११॥
यशोदा स्नेहसंक्लप्ता विलोक्य सुतमागतं ।
चुंबंती वदनं प्राह रागिणीमति वत्सला ॥१२॥
यशोदा—पश्य रागिणि कृष्णस्य कस्मान्म्लानं मुखाम्बुजं ।
अपि क्षीणशरीरोऽपि क्षुच्छ्रान्तोऽपि न संशयः ॥१३॥
तस्माद्द्विजान्वै वेदज्ञान्यथेच्छं भोजयाम्यहं ।
यस्मात्पुष्टि र्भवत्यस्या ह्येतन्मे निश्चितं मनः ॥१४॥
रागिणी—अपि देवि कथं ते च विस्मृतः स महोत्सवः ।
उक्तः कीर्त्तिदया यस्तु वृषासुरप्रसंगतः ॥१५॥



यशोदा—साधु तत्स्मारितं मे तु गच्छ रागिणि साम्प्रतम् ।
निमन्त्रय व्रजं सर्वं कामं राधां वराननाम ॥१६॥
तदा सा रागिणी सर्वानामंत्र्य बिनयान्विता ।
आगत्य भवने शीघ्रं गृहकृत्यमथाचरत् ॥१७॥

स वै महोत्सवो भद्रे त्वया चापि यथाविधं ।
दृष्टो बहुसमाजोऽपि भूरिभोजनसंयुतः ॥१८॥
प्रथमं श्रद्धया चैव ब्राह्मणा भोजितास्ततः ।
गोपाला गोपबालाश्च यथारुचि पुनः किल ॥१९॥

व्रजनार्य्यस्ततः सर्वाः कीर्त्तिदां तु बिना सखि ।
आगता आदरेणाथ पूजिता भोजिताश्च ताः ॥२०॥
आयातां च तदा राधां समालोक्य व्रजेश्बरी ।
अभिनन्ददतिप्रीत्या वर्णयामि च किं खलु ॥२१॥

मूर्द्धिनआघ्राय च तां प्राह वात्सल्यभरसंकुला ।
यथाश्रुतं मया गोष्ठे तदा त्वं सत्यवादिनी ॥२२॥

धन्या सा कीर्त्तिदा माता यस्या एतादृशी सुता ।
सौभाग्यमचलं बत्से लप्स्यसे नात्र संशयः ॥२३॥
इति तां च समाश्लाघ्य बासोऽलङ्कारभोजनैः ।
अपूजयत्तत्सा प्रीत्या पुनः सर्वा अपूजयत ॥२४॥

अपि तां च मुहुर्भद्रे पृच्छति स्म सगद्गदम ।
कथं नात्रागता बत्से कीर्त्तिदा कीर्त्तिवर्द्धिनी ॥२५॥
सा तु लज्जावशात्किंचिद्वक्तुं नाशकदुत्तरम ।
कृष्णो बिलोक्य दयितां दूरं वै व्यचरत्ततः ॥२६॥
आवाद्यन्त विचित्राणि वादित्राणि महोत्सवैः ।
गायन्त्यः सुस्वरं गोप्यो सजत्कृष्णयशोमलं ॥२७॥

रात्रौ च जागरो भद्रे सर्वाभिस्तत्र कारितः ।
उदारातिमना यस्मादभवन्नंदगेहिनी ॥२८॥

कृष्णं विलोक्य मुदिता निद्राघूर्णितलोचनम् ।
अवदन्मधुरं किञ्चित्तन्समर्पितचेतसा ॥२९॥
यशोदा-कस्मात्त्वं घूर्णसे वत्स निद्राप्राप्तोऽसि वै यतः ।
उद्गच्छ भवने स्वस्य निद्रां कुरु सुखेन वै ॥३०॥
यतोऽद्य रागिणी सर्वानागतान्पूजयत्यलम् ।
स्वपार्श्वे वाथ मित्रं स्वं नेत्ररञ्जनशालिनी ॥३१॥
वृन्दा—रागिणीमेवमालोक्य राधां च स्वमिषेणैव ।
आलम्ब्य सुबलं मन्दमगमन्निजमन्दिरम् ॥३२॥
वर्णिता च मया तुभ्यं पुरा नन्दिनि तच्छविः ।
तथापि तत्तद्रात्रौ वै समभूच्छतधाधिका ॥३३॥
आडम्बरं मणीनां तु दीपावलीबदुज्ज्वलम् ।
सौरभाडम्बरेणालि भृंगीचयबिलोभकं ॥३४॥
कृष्णस्तत्र स्वमनसि चिन्तयन्निदमंजसा ।
मद्गृहं स्वपदन्यासैः किं राधालंकरिष्यति ॥३५॥
बल्लवीनां समाजो यत् को जानाति तदागमं ।
रागिणी साहसेनैव तां कथञ्चित्समानयेत् ॥३६॥
सुबलस्तस्य हृद्वृत्तिमभिलक्ष्य गृहं गतः ।
एकाकी स्म हरिस्तस्याः समैक्षत गतिं तदा ॥३७॥
तस्मिन्काले यशोदा तां रागिणीं प्राह नन्दिनि ! ।
एतां पुष्पकुमारांगीं राधां स्वापय रागिणि ! ॥३८॥
कदाचिद् जागरेणास्या व्यथा भवति दैहिकी ।
वदिष्यति ततः किं मां कीर्तिदा चातिवत्सला ॥३९॥
तस्याश्च रागणि त्वं वै शयनं कुरु संनिधौ ।
प्रातः उत्थाय भवनं संप्रापय यथासुखम् ॥४०॥
रागिणी स्वच्छलेनैव राधामाधाय पाणिना ।
अजंसा प्रापयद्युक्त्या मन्दिरं च हरेः सखि ! ।४१।



निद्रावशाद्व्रजंती सा जानाति स्म न किंचन ।
प्रविश्य राधा तद्गेहे परावृत्त्य पुनस्ततः ॥४२॥
स्नेहसंरम्भवचसा प्राह तां रागिणीं तदा ।
त्रस्यंती सा वल्लवीभ्यः कदाचित्कापि पश्यति ॥४३॥
नैतत्तवोचितं भद्रे यन्मां स्वापयितुं छलात् ।
नयस्येकाकिनीमत्र कृष्णसारमृगालये ॥४४॥
रागिणी—दृष्ट्वा मरकतस्तम्भं शंकसे कृष्णभावना ।
मुग्धे किं त्वञ्च सर्वत्र कृष्णमेव प्रपश्यसि ॥४५॥
करं तस्यागृहीत्वेति प्रापिता सा तु तद्गृहे ।
तूलिकायाः मिषेणैव स्वयं वागादनन्तरम् ॥४६॥
इति कृष्णः स्वयं तां च प्रहस्य प्राह नन्दिनि ! ।
यत्तां कपाटमारोप्य ह्यन्यतो गंतुमक्षमाम् ॥४७॥
कृष्णः—प्रिये पश्य विनोदाख्यं मन्दिरं भुवनोत्तरम् ।
यद्द्य शोभते कामं पादपद्मांकितं तव ॥४८॥
अत्र प्राप्तां च दृष्ट्वा त्वां शपे तुभ्यं प्रिये यतः ।
स्वयं धर्तुं न शक्नोमि परमानन्दनिर्वृतः ॥४९॥
राधा—मुंच मामुचितं ते किं महोत्सवमिषागतां ।
बलादारुध्य भवने कदर्थं कुरुषे यतः ॥५०॥
शृणोति यदि मे माता यशोदा वा यशस्विनी ।
तर्किं भवेन्न जानेऽहं तस्मान्मां त्यक्तुमर्हसि ॥५१॥
व्रजनार्योऽपि सर्वास्तास्त्रिविधे वयसि स्थिताः ।
महोत्सवागता धूर्त वदिष्यन्ति निशम्य किम् ॥५२॥
कृष्णः—अत्र प्राप्ता च राधे त्वां ज्ञातुं शक्तोऽस्मरोऽपि न ।
कोऽपि ब्रह्माण्डचारी वा किमुतैता व्रजांगनाः ॥५३॥
तस्माच्चिरोत्कंठयात्तं चातकं लोभिताशयम् ।
पायस्व यथा कामं निजाधरसुधारसम् ॥५४॥

वृन्दा—इति प्रलोभ्य वचनै राधिकां कामविक्रमैः ।
आनन्दयत्स गोविन्दस्तत्समर्पितमानसः ॥५५॥
यथा कामं च तद्रात्रौ तस्मिन्मोहनमन्दिरे ।
अरीरमत्प्रलोभ्यांगीं कृष्णः कामकलाद्भमः ॥५६॥
प्रातरेव च तां भद्रे प्रबोध्याथ सुरागिणी ।
दृष्ट्वा यशोदां राधां वै संप्रापयच्च तद्गृहे ॥५७॥
कीर्त्तिदा तां समालोक्य प्राह प्रीत्यातिवत्सला ।
रात्रौ वत्से त्वया कस्मादुषितं तत्र मां वद ॥५८॥
व्याकुला इव दृश्यंते केशाः संयमितास्तव ।
कथं संत्रोटितो हारः पूर्वान्हे यश्च गुम्फितः ॥५६॥
कौतूहलपरे कामं शिथिला च प्रदृश्यसे ।
शंके नारीसमाजेषु कृता क्रीड़ा यथा तथा ॥६०॥
राधा—तस्मिन्महोत्सवे मातः समभूदतिकौतुकम ।
सर्वा व्रजकिशोर्य्यश्च संप्राप्ताः समलंकृताः ॥६१॥
परम्परानिहासेन नृत्यः क्रीड़ापरायणाः ।
आनन्दिताश्च ताः सर्वा विरमंति न च समाः ॥६२॥
तस्मादहं बलेनैव व्रजराज्ञ्या निजान्तिके ।
स्थापिता ताः स्वयं यस्माद् निवारितवती ततः ॥६३॥
एवं मां च समानन्द्य वासोऽलंकारमालया ।
अपि सौहार्दमकरोन्मयि मातः परं ततः ॥६४॥
वृन्दा—इति राधा वचः श्रुत्वा सा साध्वी चाभिनंद्य तां ।
स्वयं तु गृहकार्य्येषु संप्राप्ता च तदा सखि ! ॥६५॥
एवं कृष्णः स्वभवने रमयामास राधिकाम् ।
स्वच्छलेनैव किं तस्य बर्णयामि च कौशलम् ॥३६॥
एवं स शिशिरं कृष्णस्तत्संगबलदर्पितः ।
आनन्देनानयत्सर्वं कौतूहलपरायणः ॥३७॥
इतिकृष्णालयविहारः



नन्दिनी—अत्यद्भुतं तु रागिण्याः छलं तत्र श्रुतं मया ।
यन्नारीनिकराद्राधां प्रापयन्नन्दनन्दनम् ॥१॥
तस्मिन्महोत्सवे देवि त्वं चाहं वस्थिताभवम् ।
अभिसारश्च तस्या वै न ज्ञातो हि कथंचन ॥२॥
अन्या वै वनजन्या या सा लीला राधिकापतेः ।
कथं जानामि तां देवि विना त्वत्तः श्रुतं व्रजे ॥३॥
मनोरमां हरेर्लीलां शृण्वन्नपि निरन्तरम् ।
कस्तृप्येदेकमनसा परमानन्ददायिनीम् ॥४॥
वृन्दा—शृणु नन्दिनि प्रेमाढ्ये वनजातं सुकौतुकं ।
किं वर्णयामि तत्तुल्यं न भूतं न भविष्यति ॥५॥
प्रवृत्ते ऋतुशार्दूले वसन्ते शृणु नन्दिनि ! ।
वृन्दावनस्य किं शोभां कथयामि यथाविधि ।३॥
रंजिता मंजरीपुंजै र्गिरोन्मत्तपिकस्य च ।
मुखरिता रसाला यन्मोहयन्त्येव कामिनः ॥७॥
नवपल्लवपुष्पाढ्या वल्लर्य्यस्तु यतस्ततः ।
व्याकुलाश्चालिमालाभिः शोभन्ते स्म मधुश्च्युतः ॥८॥
कपोतसारिकाकीरनादैरतिमनोहरैः ।
आपूरितं वाशाभिःयत्कमनीयं वनान्तरम् ॥९॥
मलयानिलसंयुक्तैः पुष्पसौगन्ध्यसंवहैः ।
वासितं विपिनं तत्र यूनाकुलमनोहरम् ॥१०॥
द्रुमाः दलफलैर्भारैर्नम्राः शाखा भजंति हि ।
नमनेन लताव्याजाद्बोधयन्तीव मानिनीं ॥११॥
विराजन्ते लतागारा नानापुष्पैः विमण्डिताः ।
चित्रिता इव मांगल्ये भृंगीगीतेन संयुता ॥१२॥
प्रियनर्मसुहृद्युक्तः संप्राप्तस्तत्र मोहनः ।
समालोक्य वनस्यालि शोभालुब्धमनास्तदा ॥१३॥

माकन्दमंजरीं नीत्वा धारयत्यपि मूर्द्धनि ।
कोकिलागीतलोभेण छायायां तस्य तिष्ठति ॥१४॥
माधवीकलिकां नीत्वा मालां रचियति स्वयम ।
मुक्ताफलसमानां वै राधायाः कंठशोभिनीम ॥१५॥

पीतपुष्पाणि आदाय शाखायां कुतुकान्वितः ।
अगुम्फच्च विहारार्थं कामदण्डसमोपमम ॥१६॥
क्वचित्पुष्पाभिरचनैः कन्दुकानि वहूनि वै ।
करोति परमप्रीत्या नानाकेलिपरायणः ॥१७॥

एतस्मिन्नेव कालेऽतु राधाद्या ब्रजयोषितः ।
संप्राप्तास्तत्र ता भद्रे ! द्रष्टुं मधुकरश्रियम् ॥१८॥
प्रविशन्त्यो बने रम्ये तद्विहारपरायणाः ।
अवर्णयत तच्छोभां सर्वा मत्युनसारतः ॥१९॥
राधा—दृश्यतां नितरां सख्यो माधव्याम्तु महोत्सवः ।
प्रफुल्लिता मधु प्राप्य या मुदं वर्द्धयत्यलैः ॥२०॥
ललिता-एतस्या अभिपश्यन्तु माधव्या मानगौरवम ।
पादे पतत्यसौ भृंगः कौटिल्यं न त्यजत्यपि ॥२१॥
विशाखा-रसालमञ्जरीं दृष्ट्वा याति पुंस्कोकिलो मुदम् ।
तद्वशत्वेन यश्चान्यां लतां द्रष्टुं न बांछति ॥२२॥
तारा—स्वलावण्यैः कथमियं भ्रमर्य्यनुगतं पतिम् ।
स्पर्शकामं लतावृन्दे भ्रमणाद्वंचयत्यलं ॥२३॥
मधुकरी-समालोक्य प्रतीपं वै पतिमन्यवधूरतम् ।
तस्यांगरागदोषेण स्पष्टं तस्मान्न वांछति ॥२४॥
वृन्दा—एवं ब्रुवंत्यः क्रीडन्त्यः परस्परं मुदान्विताः ।
प्राप्ता स्तस्मिल्लताजाले यत्रासीन्नन्दनन्दनः ॥२५॥
समालोक्य च गोविन्दं बने केलिपरायणम् ।
उपासर्प्यंस्तदा सर्वाः कौतूहलबिलोभिताः ॥२६॥



तदा कृष्णोऽपि सर्वास्तां आगतां विपिने मधौ ।
बिलोक्य राधिकां चैव परां मुदमवाप्तवान ॥२७॥
मां समाहूय गोविन्दो वार्त्तार्थं प्राणुदत्ततः ।
यत्र राधा निजालीभिर्लीनाभूद्गह्वरं वरे ॥२८॥

मया प्रोक्तवता तत्र गत्वा तच्छृणु नन्दिनि ।
यथायोग्यं बने प्राप्ता सा राधानन्दचंद्रिका ॥२९॥
अलं कुरु मधौ राधे माधवं मधुरोदयम् ।
माधवी मधुयोगेन मुधा किमिह संस्थिता ॥३०॥

संशास्ति हि महीं मुग्धे वसंतो नृपसत्तमैः ।
यस्मिन्राज्ये तु दाम्पत्यो विंश्लेषो नो सुखप्रदः ॥३१॥
सखा मनोभवस्तस्य दुर्जयो यो जगज्जयी ।
तस्यानुमन्त्रिता लोकं स्ववशे तु करोति हि ॥३२॥

विशेषाद्दंपतीनां तु वियुक्तानां परस्परम् ।
पीड़ां करोति चरितै र्वसन्तः ऋतुभूपतिः ॥३३॥
साम्प्रतं प्रेषितं यंत्रं मानिनीमानमर्द्दनम् ।
रसालपत्रे लिखितं मषीभिर्भृंगपंक्तिभिः ॥३४॥
मलयानिलनीतं तदुच्चैः पुंस्कोकिलः पठेत ।
कर्ण निधायत राधे संश्रृणुष्व यथाविधम् ॥३५॥
पिकोऽयं किं पठत्याशु तच्छीघ्रं तु विधीयताम् ।
निश्चिन्ता त्वं कथं राधे स्थितासि रहसि स्थले ॥३६॥
ललिता-श्रुतं देवि ! मया सर्वं यथा पठति कोकिलः ।
मधुश्च्युतं मधौ बल्लीं सेबतां हि मधुव्रतः ॥३७॥
राधा—ललितां तु लतां प्राप्य को न सेवेन्मधुव्रतः ।
तत्रापि शरलां कामं वसन्ते मधुवर्षिणीम् ॥३८॥
वृन्दा—राधेऽति शरलेयं न ललिता वक्रगामिनी ।
फलिन्यां यल्लतायां वै स्वयं प्राप्नोति वांछकः ॥३९॥

अंजसा तत्र सम्प्राप्तः कृष्णकेलिपरायणः ।
विलम्बं हि समाज्ञाय वन्यवेषैरलंकृतः ॥४०॥

कृष्णः—वसन्तवासरे राधे यदस्त्यद्य महोत्सवः ।
कर्त्तव्यो विविधोपायैः किं वृथा मौनमाश्रिता ॥४१॥
मंजुया मां विशाखेयं पश्य त्वां दर्शयत्यपि ।
कुंकुमेन त्वन्मुखाब्जं बिलेप्तुं राधिके वत ॥४२॥

वृन्दा—इत्येवं कथयन् तां वै महानन्दपरिप्लुतः ।
तावन्स्वपाणिना कृष्णो व्यलिम्पत्तन्मुखाम्बुजम् ॥४३॥
श्रीकृष्णं प्रणयक्रोधाद् भ्रूभंग्या सा समैक्षत ।
शिक्षिता नितरां यस्मादपरे वंचने क्रिया ॥४४॥

तदा कृष्णेन हस्ताभ्यां गुंफिता या मनोरमा ।
समर्पयत तां प्रीत्या मालां वासन्तिकां सखि ॥४५॥
राधिका कृष्णवक्त्राब्जं चन्दनेन संगमयत् ।
अलिम्पत्सा क्षिप्रेणैव प्रतिकृत्यं यथा भवेत् ॥४६॥
प्रक्षेपणादिक्रीडाभिः फलैः पुष्पदलैस्ततः ।
क्रीडंतौ प्राप्तमोदं तौ परस्परमुदान्वितौ ॥४७॥
प्रसूनरचितैर्दिव्यैः कन्दकैश्च परस्परम् ।
अखेलतां छलेनैव उभौ तौ कौतुकान्वितौ ॥४८॥

कृष्णस्य कन्दुकास्तत्र सर्वाभिर्गोपिताः छलैः ।
अकन्दुककरं कृष्णं दृष्ट्वा सर्वास्तदाहसन् ॥४९॥

ललिता-क्रीडाश्रान्तोऽस्ति वै कृष्णो ह्यत्र राधेऽतिलीलया ।
दृश्यन्ते नितरां वक्त्रे स्वेदाद्भव नुबिन्दवः ॥५०॥

कृष्णः—ललिते शिक्षयसि किं राधां क्रीडापरायणाम् ।
कन्दुकानि समादाय गृहे गन्तुं यदिच्छसि ॥५१॥

ललिता—कन्दुकानि कया कृष्णं गृहीतानि यतस्तव ।
मुधा संशंकसे चात्र पश्य तत्र कुतोऽपि वा ॥५२॥



कृष्णः—राधया तु स्वयं नीत्वा नो जानामि क्व गोपिताः ।
त्वं दर्शयत ललिते रचितानि मयैव वै ॥५३॥

ललिता—राधे यदि त्वया कृष्णकन्दुकानि किलाथवा ।
गोपितानि च तानीह देहि कृष्णाय सत्वरम् ॥५४॥
यद्यत्र विपिने मुग्धे त्वया क्षिप्तानि कुत्रचित् ।
दर्शयस्व स्वयं कृष्णमतिहासं विहाय वै ॥५५॥

कृष्णः—त्वमेव राधिकेऽरण्ये कन्दुकानि यतस्तत ।
सन्दर्शय च लोभाढ्यं मां विनोदय तत्सुखैः ॥५६॥

सख्यः—वयं सर्वा विचिनुमो गत्वा गह्वरकानने ।
राधा क्व नु व्रजेत्कृष्ण कन्दुकानि यतस्तव ॥५७॥

बृन्दा—इति सर्वा मिषेणैव गता बल्लीकुलांतरे ।
कृष्णो राधां समासाद्य समक्रीडत नन्दिनि ॥५८॥

तदंसे वाहुमाधाय बने केलिपरायणः ।
व्यचरन्सर्वतो भद्रे तत्संगसुखनिर्वृतः ॥५९॥
क्वचित्सुगन्धिकुसुमैस्तस्याश्चूडयते सखि !
क्वचित्तस्याश्च वक्त्राब्जे वीटिकां प्रददाति वै ॥६०॥
क्वचित्तत्संमुखो भूत्वा मुखशोभां समीक्षते ।
क्वचित्तन्नेत्रबलनैः प्रमुह्यति सचित्रवत् ॥६१॥

क्वचिदापीड्य दोर्भ्यां तामपि पश्यति तन्मुखम् ।
लज्जया कुंचितादृशः स स्नेहेनाक्षिप्तमानसः ॥६२॥
एवं नानाविधं राधां समानन्द्य बनान्तरे ।
मधौ च माधवः भद्रे समवापत्सुखालयम् ॥६३॥
ततश्च ललिताद्यास्ताः संप्राप्तास्तत्र नन्दिनि ।
बिलोक्य राधिकां तत्राभ्यनन्दन्सुतरां सखि ॥६४॥

पश्यन्त्यः कृष्णवक्त्राब्जं राधामाधाय चाग्रतः ।
ललिताद्या गोपवध्वोऽगमन्सर्वा गृहं सखि ॥६५॥

कृष्णोऽपि प्रेयसीसंगात्पूरितोऽन्तः सुखेन वै।
सुरभीसंगमाधाय स प्रापन्निजमन्दिरम् ॥६६॥

एवं च हरिणा भद्रे लीला परमदुर्लभा ।
कृता तत्र मधौ राधा स्नेहयंत्रितचेतसा ॥६७॥

श्रोतव्याप्यथ गातव्या कृष्णकेलिमनोरमा ।
बसन्तर्त्तु प्रवलिता परमानन्ददायिनी ॥६८॥

बसन्तऋतुविहारवर्णनम् । ( २२५ )

इति श्रीकृष्णकौतुके ऋतुविहारवर्णने
सप्तमः सर्गः

-:०:※:०:-

# ❀ अष्टमः सर्गः ❀

वृन्दा—अतः परमातपचक्रवर्त्ती जगतीपतिरतितीव्रतरकरनिकरप्रचण्डमार्त्तण्डमण्डलातपत्रेण बिराजमानोज्ज्वाज्वल्यमान रूप निज तेजः प्रसरणप्रभावेण दशदिशामन्तरं ज्वलयन्निव प्रागात् ॥१॥

यतो मरुद्देशोद्भवाः शाखिनस्तयाप्रतिहतप्रतापतापतापितस्कंधवंधात्तदुपशान्तये प्रकर्षेणोत्पतंतो पक्षिणां पक्षिछायां समाकांक्षति ॥२॥

अपि तु निम्नगास्तद्देशगामिन्यः शुष्कतोयास्तस्य दुःसहैश्वर्य्या विरहानलदंदह्यमाणा दुर्बारतृषाधिक्यवशादुन्मत्तवच्चिराज्जलोत्कंटया दूरादाधावितप्राप्तानां पथिकानां स्वेदोद्भवाम्बविन्दूनाश्रित्य किमपि तापं त्यक्तुमुत्सहते ॥३॥



मनुजाश्च तद्देशवासिनो लोकोत्तराणां प्रेयसीनां मधुरामृतापूरिताशया दिवि चरा इव कामं जलं न स्पृहयति ॥४॥

कदाचित्तस्मिन्नवसरे परिस्फुरितहरिद्दुर्वापरम्पराभिरलं कृतकृतांतभगिन्युपकंठे नियुज्य नैचिकीकुरुम्बं स्वयं तत्रैव नातिदूरे निबिडबिटपिकुलवलितललितस्फुटितसुरभिकुसुमनिवहसुभगवनलेखायां हरिः सुवलप्रभृतिभिः सखिभिः संवृतो व्यचरत् ॥५॥

ततः स्वभावतः परस्परसंघटितकुटिलशाखाकलापपादपममहद्घनशीतलछायायां विविधविपिनविचारणविहारवलितहृदयः स्ववंशिकामधरे निधाय मधुरपदमुद्गिरंती हरिरवादयन्। तस्याः सुललितध्वनिमाकर्ण्य विस्मृतदैहिकसकलविपिनजनांव्याममुह्यन्नपि तदा नातिदूरे राधिकासखी बिशाखा समवधार्य तद्रवमापत् तत्रैव ॥६॥

कृष्णः-किं विशाखिके त्वमेवैकाकिनी कथमकांडे तस्मिन् महागह्वरे समागतासि ? ॥७॥

बिशाखा-सुन्दर साम्प्रतं राधिकया दिनकरस्य पूजनार्थे वन्धुजीवकुसुमनिकरमानेतुमभिप्रेषितास्म्यहं तदर्वाचितकुसुमोत्करा गवेषयंती कुतोऽपि वा तां न प्राप्नामि ॥८॥

कृष्णः—अयि क्रोडाकुतुकिनि ! तया धूर्त्तया ललितया केनापि स्वच्छलेनैव त्वमत्र प्रेषितासि तत्कथमनीदृशं संभावयसि धूर्त्ते ! ॥९॥

बिशाखा-नन्दनन्दन ! यदि ममोदीरिते तव कथंचिन्न भवति विश्रम्भोऽधुनास्यानृतस्य प्रसंगात्तत्कथं मां न भवान्परीक्षयेत् ॥१०॥

कृष्णः—अयि प्रकृतिकितवकनककलेवरे त्वां कथमहं विम-

लनिकषमिलितललितांगद्युतिमधिगतां परीक्षितुं वांछामि ॥११॥

बिशाखा-नागर त्वं नबोल्लसितनवाम्बुदस्तथा चपलया राधया समलंकृतो भव वयं तु नितरां युवयोः सुखविशेषमालोक्य तदानन्दासबपाननिवृ तिलक्षणा ॥१२॥

कृष्ण:—किं सत्यं बिशाखे यत्त्बया बिपिनान्तरे राधिकां न प्राप्यते ॥१३॥

बिशाखा-मोहन मया त्वसत्यं कदाचिन्न गदितम् । त्वदग्रतो भवान्यज्जानाति दाककेलिप्रसंगान ॥१४॥

कृष्ण:—अहं बिशाखे ! त्वत्संगे भूत्बा त्वां दर्शयामि राधामानंदचद्रिकां यदेतस्य बनस्य गुह्यस्थलान्यहमेव प्रजानामि राधिकापि नचापरे ॥१५॥

बृन्दा—ततो विशाखां समाधाय यतस्ततः कुंजदुर्गाण्यपि गह्वराणि द्रुमसंघट्टैः संकीर्णानि दर्शयन्क्वचित्कलिन्दजोपकूले लतातातिपरितस्फीतविकसितप्रसूननिचयनि—रुद्धमधुलुब्धमधुव्रतबातनितांतशीतलसलिलसंमिलित--समीरमंगतमनोज्ञवेतसीनिकुंजे यमुनावीचीलीला—लोभिताशयां ललितादिभिरानन्दितां राधामुपविष्टां हरिराचष्टे तदाकस्माद्धरेरागमनमालोक्य सा सविस्ययं ललितां बिलोकयंती बिशाखां सभ्रूभङ्गमाह हसन्तीब ॥१६॥

राधा—कथं पतिव्रतेऽनुगतनितांतमीनकेतुग्रहगृहीतचित्रोन्मत्तपुरुषसिंहभयशंकितेवात्रागतासि । अपि तस्य प्रखरनखरप्रहारचिन्हितांगलतिके तिष्ठ ॥१७॥

बिशाखा-अयि मुधाशंकिनि निजसहचरीजनवंचनबिचक्षणेऽलमति बिस्तरेण । यदहं नितान्ततीव्रखदिरकंटकप्रभिन्न-



सर्वगात्र्यपि तद्बाधया चलितुमपि न समर्थाऽस्मि तथापि दुःखप्रसंगमासाद्य वायमेति मेंऽगयष्टिः ॥१८॥

बृन्दा--इत्युदीर्य्य सलज्जं रोदिति । राधा स्वपाणिना तस्या मुखं संमृज्य पुनराह ॥१९॥

राधा--सखि परिहासभावनया मया प्रतीपमुक्तं । किं त्वया यथार्थं ज्ञातं तद्यथार्थमस्तु । २०॥

बृन्दा--ततः संरम्भात्तस्या हस्तमनादृत्यापसर्पति ।

ललिता-राधे मुंच परिहासं यदेषा बनभ्रमणात्कामं क्लृष्टास्ति ॥२१॥

बृन्दा--तां स्वहस्तनिर्मितेन पुष्पव्यजनेन तच्छ्रममपोहितुं मन्दं बीजयन्तीनामानन्दयत् ॥२२॥

कृष्ण:--अति प्रियस्य बिश्लेषाद्भवेद् दुःखमनर्गलं ।
पुनः प्राप्य तदाल्हादात्स्मर्यते बापि नेह तत् ॥२३॥

ललिता--सत्यं चिरान्संगवंचितेयं मम सखी सुन्दरैनां प्राप्य किं स्फूर्त्तिर्भवति ॥२४॥

कृष्ण:--राधे समालिंगयैनां बिशाखां यद्विपुलभयान्मुक्तास्ति ॥२५॥

राधा—सत्यं ब्रजबधूनां बिपुलं भयं भबाबयंत्बत्तो मुक्तास्ति ॥२६॥

ललिता--राधे त्यज बिशाखां यत्परमश्रान्तास्ति तस्माद्यमुनायां स्नापयाम्येनाम ॥२७॥

बृन्दा---इति ललिता बिशाखां समादाय क्वचिद्यमुनोपांते प्रापयत्तां । ताबत्कृष्णो राधायाः पार्श्वे समुपसृत्य सुहृष्टः श्रीखण्डमार्द्रपाणिना तद्धृदयलेप्तुं समीहते ॥२८॥

राधा----मुंच दुर्विहारं यन्सख्यौ मे पश्यतः खलु ॥२९॥

कृष्ण:--राधे बनलेखामासाद्य कुटिलवप्रासु लीलया संबहंतीयं यमुना चात्र द्रष्टुं कया शक्यते ॥३०॥

बृन्दा – तदा मृदुलघृष्टश्रीखण्डकलापं कर्पूरकरम्बितं कम्पितकरेण तद्धृदयदेशं व्यलिपत्स्वयं हरिः य अपि तु तत्सुगन्धकुसुमनिर्मितव्यजनेन शनैरशुष्कयत् । तदा राधापि सप्रणयाबलोकनैर्लज्जया नतकंधरया विविधरचनाभिः परमवल्लभस्य बल्लवेन्द्रनन्दनस्यांगं चन्दनकलापैश्चित्रं व्यलिपत् । ततो वीटिकाप्रदानानन्दितौ यथेच्छां कामलीलामाकुरुतां । ततः स्वेच्छया समुद्गत्य तत्स्थलान्नातिदूरे प्रस्थितायां नौकायां समारुहताम् । ततश्च ललिताद्याश्च सख्यः समालोक्य तत्रैव जवेन समागमन् । ततः कलिन्दजायाः सगम्भीरगर्भप्रोच्छलद्विमलसलिललहरीकलापचलनांदोलितनौकया प्रगल्भयोद्विग्ननयनां विलोक्य हरिः प्रेयसीं राधां तद्भयमपहितुमखिलविद्याविनोदबिशारदः सुखेनैब पारं प्रापयत् । तदा तद्विमलपुलिनकेलिषु संवलितलोभः कमलकुलान्यवलोक्यालिकुलमधुररवध्वनितहृद्वृत्तिरतुलसुखमवापद्राधिका—संगात ॥३०॥

चक्रबाकमिथुनमतिप्रणययुतं समालोक्य तत्र परां मुदमवापतां ।

"नौकायां स समारुह्य लीलया नन्दनन्दनः ।
पूर्ववप्रे समानैषीद्राधां निजसखीयुताम ॥

तदा कृष्णमनुमोद्य मधुरवचनरचनाभिः स्वसखीमवलम्ब्य राधिका स्वगृहमगात् । कृष्णोऽपि तत्परिष्वंगरंगसर्वांगः सुरभीः समाहूय ब्रजमागमत् । एवं नन्दनन्दनो राधामानन्दयन्वृन्दावनमाश्रित्य सुखेन ग्रीष्मर्त्तुमतिबाहयति स्म ।३१॥

( ग्रीष्मविहारः )



बृन्दा—अथ सुरपतेः सकलदिक्चक्रविजयार्थं सज्यीकृतकमठकठोर-कोदण्डटंकार-लुब्धच्त्ररन्गंदगंडगजगणा इव परिमुक्तनिगंडाः कज्वलशिलोच्चयसमानोल्लासितो जलदगणान्प्रमोदमगमयतस्ततः परिधावति स्म । अपि कुलिशभीषणघाताघातघोषघोषितदिगन्तरमतिचलज्ज्वाल्यमानविद्युद्वल्लिरपि प्रभया ब्रह्मास्त्रप्रभेन बलायमानेन जनमनांसि व्याकुलयति स्म । तदा प्रावृड्तुराडखिलजलदकुले निजदलायमानेन बलितो विमलबकप्रकररुचिरचमरवीज्यमानो दुन्दुभिः स्वनेनैव गम्भीरगर्जितघनघोषेण घोषितः स्वलीलया सकलकामिनां काममुद्दीपयन्निव गोबर्द्धनगिरिशिखरवरेऽवात्सीत । तं सनीरनीलमेदुरमुदिरनिकरसंबृतं बिलोक्य तन्महीधरनिवासिनो मयूरचातककपोतकोकिलसमूहाः परिलब्ध परममुदा कूजन्यथा तथा च । ब्रजेन्द्रनन्दनस्तदा गिरिवरमधिकसंघटितघनघनघटाभिरलंकृतं बिलोक्य परममुदितहृदयोऽग्रे निधाय धेनुनिवहमखिलसखिभिरावृतश्चारणायागमत्तत्रैव तन्नितम्बबिम्वबिलसितहरितनिविडतृणे नियुज्य धेनुपालीं स्वयं तदुपरि तदतुलशोभां बिलोकितुमारोहत् । तत्र निबिडनबाम्बुदाडम्बरद्युतिबिनिन्दकांगिकप्रभामबलोक्य कृष्णमुदिरमनर्त्तन सर्बे बर्हिगणाः सुलीलया नन्दितमनसोऽपि व्यननदंस्तत्र वासिनस्ते । ३२॥

तत्र दुर्बारात्यबिरलासारपतनप्रसिक्तपीताम्बरबिलग्नमरकतनिचयनिभांगसौभगघनबिपुलदलसंकीर्णश्रीख---ण्डाह्विपमण्डपमासाद्य हरिः परमोत्कृष्टजलवृष्टिकौतुकं बिलोकितबान् । यतस्ततो जवबिलुठितोपलबालक-

कलापसंमिलित चलत्प्रवलसलिलनिबहपतननिनादघोषितश्रवणरन्ध्रोऽपि सजलमवलशीतलानिलप्रसवनविधूतहृदयः कुंजमूलमाश्रित्य संश्लिष्टांगवल्लिः सुहृद्गणैर्नन्दतनुजो मोदते स्म महीधरस्य शिखरे। तत्र विपुललताकुलसुपल्लवमवगुंठ्य विविधकुसुमनिचयरचनाभिरलंकृतमवलम्ब्य तच्चन्दनद्रुमस्कन्धविरचितं सुरभिकुसुमनिर्मितासनेनोन्नतमानां रुचिरदोलामान्दोलनाल्हादभरान्वितो नन्दतनयो अगद्चटुलमिदम ॥३३॥

कृष्णः—चटुलायं परमरमणीयतरस्थलविशेषस्तथापि राधिकां विना न शोभते। तद् शीघ्रमुद्गच्छ ललितां विज्ञापयित्वा किमपि विरमिते जीमूतनिविडाडम्बरे केनापि छलेनैवालक्षितां चन्द्रवलीसख्या राधामानन्दकौमुदीमिहानय ॥३४॥

वृन्दा—इति चटुलः कृष्णं प्रणम्य जवेनैव क्वचिन्सघनलतावलीभिराच्छादितकुंजसदने,सूर्य्यपूजनार्थमागतायाः प्रवलवलाहकोन्मत्तकरटिरूद्धमार्गाया राधायाः संगगतां ललितामासाद्य सविनयमवनतकंधरस्तामवोचत्तत्रैव ॥३५॥

चटुलः—यदिदानीं कृष्णेन गोवर्द्धनस्य शृंगे विरचितोऽत्यद्भुतदोलाविहारस्तत्र राधां विना केनापि योगेन गोविन्दो विहर्त्तुं न वांछति तस्मात्प्रेषितोऽस्मि तवान्तिके यथा तथा राधां प्रोत्साहयित्वा प्रापयात्रैव ॥३६॥

ललिता—राधे युक्तमेतद्यदेतस्मिन्काले दोलालीलावश्यकी तद्दृश्यतेऽप्युपशोभतेऽसौ घनाडम्बरः शीघ्रमुद्गच्छ तत्कौतुकं विलोकयामः ॥३७॥

वृन्दा—इति चटुलस्ताभ्यां प्रफुल्लितहृदयसरोरुहो गोवर्द्धनोपान्ते



संप्राप्य ललितां प्रत्याह ॥३८॥

चटुलः—ललिते नातिदूरे चन्दनद्रुमाणां छायायां प्रलम्बितदोलां प्रकल्प्य तद्विरचनविधौ प्रसक्तहृद्वृत्तिमतिप्रतीक्ष्यमाणं गोपेन्द्रतनुजं त्वं राधिकां नय तावदहं चन्द्रावलीसखीनां वंचनार्थं नैचिकीकुरुम्बं गिरेर्नितम्बान्मानसगंगाया उपकूले प्रापयामि ॥३९॥

वृन्दा—इति चटुलो नातिदूरे व्रजन्पद्मामापश्यत्।

पद्मा—चटुल कथमिहागतोऽसि यत्कदाचिद्युष्मदागमनं न दृश्यते ॥४०॥

चटुलः—पद्मे साम्प्रतमिन्द्रे वर्षति सति कृष्णेन प्रेषितोऽस्मि गदितं च। गोवर्द्धनगिरेरधोवर्त्तिन्यां भूमौ हरितत्रृणोद्भववाहुल्यं निरीक्ष्य तच्छीघ्रमागत्य मां समास्वसिहि यन्नित्यं तत्रैव गोचारणार्थं व्रजिष्यामि ॥४१॥

पद्मा—अयि सुष्ठ्वागतोऽसि धन्योऽसि त्वं यत्त्वदीरितेन कर्णामृतेन वचनेन नितरां निर्वृताऽस्मि यद्यपि सख्या प्रेषिता करालामाह्वयितुं गोष्ठे व्रजंत्यस्मि तथाप्यनेन मधुरोत्तरेण परावृत्य स्वसखीमानन्दयामि चन्द्रावलीम् ॥४२॥

वृन्दा—इति पद्मानंदसंवलिता तं चटुलमानन्द्य स्वगृहमगमत् चटुलस्तदा शनैः सुरभीसमूहमग्रे निधाय मानसगंगाया वप्रे विहाय स्वयं कृष्णान्तिकमगमत् तदा हरिर्नूपुरतित्तरीमधुरध्वनिं निशम्य किमपि चकितेक्षण एव वितर्कितराधिकागमन आसीत्। तावत्सुबलेन दर्शिता प्राह चैवं सुन्दर पश्य यतः सकलसहचरीसन्दोहसमावृता राधिकाऽयाति ॥४३॥

कृष्णः—सखे सत्यमियं विशाखाकरालम्बिता कुसुम्भरंगरञ्जित-

मृदुलसूक्ष्म--पद्म--च्छादित --सर्वांगी यदिन्द्रगोपगणं विडम्बयंती निजालीभिर्परिवृता राधा मन्दमागच्छति। तत्त्वरस्ब दोलारचनासु यदेषोऽग्रवर्त्ती नवाम्भोजविकसितमुखश्चटुलोऽतिधाबन्समायाति ॥४५॥

बृन्दा—तावद्राधिका जातियूथिकाकुरुगवं तत्प्रसक्तहृदया विचिन्वती विशाखां प्राह ॥४६॥

राधा--विशाखे त्वमपि यूथिकाकोरककलापं गृहाण यतो मालां-रचयित्वा स्वकंठेऽर्पयाम: ॥४७॥

वृन्दा—कृष्णस्तदागमनबिलम्बमाज्ञाय स्वयमुद्गत्य राधिकान्तिकमवापत् ॥४८॥

कृष्ण:--प्रिये किं जातियूथिकाकौतुके लुब्धाऽसि यदेषा त्वदागमनाल्हादलोभितहृदया प्रस्फुरद्विपुलकोरककलापैर्मंगलजनकबहुलाजव्याजेन त्वामभिवर्षति ॥४९॥

बृन्दा—तदा राधां चटुलवचनरचनाभिरानन्द्य दोलान्तिके प्रापयत्। तदा विविधसौरभरभससंवलितकुसुमरचितमृदुलासनपरिग्रहपरमरुचिरदोलाकल्पे समारुह्यतां राधिकाकृष्णौ सख्यस्तु शनैर्मधुरस्वरं तदवसरमुपेतमान्दोलयंतो यथा रूचि सुचरितमपि गायन्त्योऽवर्द्धयन्तयोर्दोलागतयोर्मुदम्। अथ किंचिदधिकदोलितदोलाभयविशंकितनयनया राधया समालिंगितो हरिस्तन्मुखाम्बुजं सतृष्णमवलोकयन् प्रमोदमगमत्परमसुखनिधानरूप:। तदा च दोलाप्रचलनपादपदलवलितजलकणपतनपरिषिक्तसुभगबसना प्रणयकोपभरवशादिब ललितां निर्भर्त्सयति ॥५०॥

राधा—अयि प्रवृत्तिचपले भवती कस्मादधिकमान्दोलयति यन्मे नबीनसंधारितकुसुम्भरंगरंजितषाटिका प्रभवति बिगतरंगा तदलमतिप्रदोलनेन ॥५१॥



ललिता-अयि वृन्दाबनेश्वरि ! त्वदागमनमासाद्य गोबर्द्धनोद्भवा: सन्महीरुहा अमरगणा इब स्वकरपल्लवै: कुसुमनिकरमिबमभिवर्षति ॥५२॥

बृन्दा--एवं नानाहासबिलासवचनै: परस्परं हसन्तौ हासयंतौ दोलान्दोलनविहारमकुर्वातां राधिकाकृष्णौ तत: परमानन्दितस्वसखीभ्यां कृष्णं स्वलीलया विलोकयंती राधा स्वगृहमगमत्। कृष्णोऽपि गोमण्डलमादाय सुहृन्मण्डित: स्वगृहमाविशत ॥५३॥

( इतिदोलाबिहार: )

बृन्दा—अथ शरदृतुपतौ प्रवर्त्तमाने तत्प्रकृते निर्मलस्वभावे भयविह्वलसकलपांशुमरभसपवनजलदपटलदिगन्तरौपाधिक भयात् पलायितुमिव यतस्ततो वै अभूदाशांतरालोऽतिनिर्मलतरश्चापि विमल-आकाशकोशस्तरंगिण्यश्चातिबिशदसलिला: सरोरुहा: प्रसन्नाशया: प्रफुल्लानि बनजबनानि च। एब सर्वे साधवस्तदागमनाल्हादप्रसन्नहृदया: परां प्रसन्नतां प्राप्ता:। कदाचित्तस्मिन्नवसरे-ब्रजेन्द्रतनुजो नबोदिताखण्डमण्डल श्रीखण्डशिशिरतरकरनिकरं निशाकरमालोक्य सुबलेन सार्द्धं यमुनापुलिनलीलाप्रलोभिताशय: संप्राप्तस्तत्तीरजोपबनमालोकयिष्यत्। तत्र परिस्फुटितविविधसुरभिकुसुमनिवहनितांतपरिरुद्रमधुलिट् कदम्बलतातनिकुमुदवंधुकौमुदी—प्रचुररुचिरबिटपिपत्रपरिचित्रितं निखिलबनान्तरं समासाद्य पशुपसुत: परमबाप मुदं। तदा कलिन्दतनुजया विमललहरीभिरासिक्तपरमशीतलकोमलबालुकास्तरणं परिरञ्जितहिमकरकिरणगणकुमुदकुलसौगन्ध्य-

संश्लिष्टसुरभिसमीरसुखदपुलिनमाश्रित्य चक्रवाक--कुलसकरुणस्वनमाकर्ण्य ममाह सुवलं व्रजेन्द्र--तनुजः ॥५४॥

कृष्णः—सुवल पश्य कोकमिथुनं यत्परस्परवियोगाच्चन्द्रमयूखलांछितां शरच्छर्वरीमपि दुस्तरीमिव मन्यंते तन्कामदुःखेन दूनौखगोत्रमौ ॥५५॥

सुवलः--वयस्य सत्यं स्वप्रियायाः विश्लेषः परमदुःखदोऽस्ति यत्तदतिवियोगतापतापितः श्रीखण्डकपूर-नलद-शीत-प्रकरणैः कथमपि तापं न त्यजति स्म भवांस्त—दातु ॥५६॥

कृष्णः---सुवल सत्यं ममापि तस्या राधायाः संगव्यतिरेकान्सर्व-गुणगणालंकृतापीयं शर्वरी भयंकरीव प्रदृश्यते। तत्कथंचिद्वा त्वमेव समानय लोकोत्तरां तां ॥५७॥

सुवलः---मया तु साम्प्रतमत्तक्रीडया क्रीडयंती स्वसखीभ्यां ललिताया गृहे दृष्टा राधा तज्जवेन तत्रैव व्रजामि॥५८॥

वृन्दा----इति सुवलः कृष्णप्रनोदितो ललितायाः प्रांगने क्रीडमानां राधां समासाद्य यथार्थमवोचत्प्रश्रयानमितः ॥५९॥

सुवलः----राधे कृष्णः कृष्णापुलिनकेलिप्रलोभिताशयस्त्वामाकांक्षते तत्रैव ॥६०॥

वृन्दा---इति तस्योदीरितमतिक्रीडासक्तहृदया राधया नाकर्णितं केनैव नावधारितं यथार्थं ॥६१॥

पुनः सुवलः- राधे कृष्णः सव्यथं तव मार्गं चकोर इवानिमिष-नेत्रः समालोकयति ॥६२॥

वृन्दा----अपि निशम्य तद्वचनं न श्रद्दधाति स्म ॥६३॥

सुवलः---विशाखेऽतिरात्रिर्गता तथापि न विरमते राधेयं स्वकेलिकौतुकात्तस्मात्किमुत्तरं ददामि कृष्णं पन्थानं वीक्षमाणं ॥६४॥



विशाखा--अयि क्रीडाकुतुकिनि ! वाचालमंजीरवच्चिरञ्जल्पन्नयं सुवलःकिमप्यस्ति वा नास्ति स्वमुखादुत्तरं न दीयते कस्माद्वृथाकेलिभिः सुकुमारतरकरपल्लवं कदर्थयसि किं सिद्धिरवाप्यतेऽनया लीलया कथमेनं दीपमालिकावसरं प्राप्य तत्र विशदविधुदीपोद्दीप्यमानस्थलोत्तमं चोपव्रज्य निज-कौशलवलेनैवाच्छिलीलया कृष्णस्य सर्वस्वरूपिणीं वृजवधूगणगम्भीरमोहविवर्द्धिनीं मुरलीं निर्जित्य स्ववशवर्त्तिनीं न कुरुषे ॥६५॥

वृन्दा---राधा सोत्साहं विशाखां समालोकयति ॥६५॥

ललिता—सखि युक्तमामन्त्रयति विशाखा तच्छीघ्रमुद्गच्छ व्रजामः कृष्णपार्श्वके ॥६६॥

बृन्दा—इति मुरलीप्राप्तिपरिषिक्तचित्ता राधा मन्दं निजालीभिः संवृता कृष्णान्तिकं समवापत्। तत्र कृष्णेन स्वपाणि-पल्लवेन विरचितकैरवकोमलदलकलाप विस्तृतवरासनं विलोक्य परं सुखमवापद्राधा च ॥६७॥

कृष्णः—प्रिये बिकलंकनिजवदनमृगांकमधुरोदयेन चिरादुत्कण्ठितचकोर इव काममानन्दितोऽस्मि। यदेषा चन्द्रज्योत्स्नापि निजप्रियकैरवकुलमुल्लासयति ॥६८॥

ललिता-नन्दनन्दन न खलु राधिका वदनस्योपमानं चन्द्रोऽयं यत्परमविश्लेषोत्पादको निजप्रेष्ठाभिसारिणीनां कामिनीनामपि कृपणानां चक्रवाकीनां तद्दोषपरिदण्डितः क्षीयते नितरां स्वकलाभि र्न चास्या मुखेन्दुस्तथा प्रभया सदा परिपूर्णकलः स्वदयिते नितान्तमधुरोद—योऽपि ॥६९॥

कृष्णः—ललिते साधु वर्णितं यद्राधावदनस्य प्रभायां चन्द्रोऽपि स्फटिककल्पित इव प्रदृश्यते। अपि पश्य ललिते पश्चि-

न्या: पातिव्रत्यं या स्वपतिं बिना कथमपि सुखं नोद्घाटयति ॥७०॥

ललिता-नागर सत्यं का कुलकन्या त्रैलोक्ये या पाणिगृहीत स्वपतिं विहायान्यत्र नेत्रान्तमपि कुर्य्यान्न तु सर्वधर्मोल्लंघनमपि कुलवेलाबहेलनमिव गोकुलांगनानां यत्त्वद्वंशी-वशीकृताशया: पतिपार्श्वकादपि निरर्गला इव प्रधावंति ॥७१॥

कृष्ण:—ललिते सत्यं प्रेमासवप्रक्षोभिताशया: किमप्यवद्यं वा शुद्धं न जानन्ति तद्गोकुले प्रणयिन्य: प्रेममूर्त्तय इव सर्वास्तत्कथं तासां देहाभिसंधानं ॥७२॥

ललिता-राधे श्रुतं त्वया यत्कृष्णेनोक्तं ॥७३॥

राधा—कथं न यदेष स्वयमुन्मादयति व्रजमण्डलमप्युपालम्भयत्यलं तं ॥७४॥

कृष्ण:—राधे त्वं खलु स्वबिद्यायां कामं निपुणासि त्वामुपलब्धुं नाहं समर्थ: ॥७५॥

राधा—सत्यं यथा स्वयं धूर्त्तशिरोमणि: स्वच्छलेनैव परवित्तं जेतुं कोविद: ॥७६॥

कृष्ण:—राधे श्रुतं मया सुवलात यतस्त्वमक्षक्रीडायां कोविदासि तदा क्रीडय मया सह खलु ॥७७॥

विशाखा-सुन्दरावश्यं क्रीडयिष्यते राधा तव संगे यदहं राधा चापि बृन्दा भवन्संगेऽक्षचारिका भविष्यंति तदारभ्यतां मनोहरबिहार: ॥७८॥

वृन्दा—इत्येवं क्रीडन्त्या: कृष्णेन राधाया: सर्वांगुलिमुद्रिकारत्नैरलंकृतां निर्जिताय तथापि राधा न बिरमति स्म तत्क्रीडायामपि तस्या मुक्ताफलगुम्फितो हारोऽपि निर्जित: स्तदा स्वकंठान्निष्क: समारोपित: सोऽपि तथैव राधिकापि केनापि प्रयोगेन कृष्णारोपितां स्ववंशिकामजयत्तदा सर्वा: सख्यो हसंति स्म ॥७९॥



सख्य:—राधे साधु किमनेन भूषणदानेन यद् वंशिका प्राप्तास्ति तद्रक्ष यत्नेन वा विशाखां समर्पय ॥८०॥

बृन्दा—इति मुरलीं विशाखां समर्प्याकर्षमानाणांचले हरिणा तथापि क्रीडां विहायान्यत्रोपविष्टां कृष्णो विचारयति हृदये कथमनया राधया सर्वस्वदानेन मम सर्वस्वमपहृतं तद्भवतु गृहीष्ये प्रातरेव साम्प्रतं क्रीडामन्य विहारै: । इति ललिता कृष्णस्य मुखमालिन्यं विलोक्य तदानंदाय विशाखां प्राह ॥८१॥

ललिता-यद्राधाहृदयं हारशून्यं कामं न शोभते तदुद्गच्छ मल्लिकाहारोत्तमं निर्माय प्रियसखीं परिधापयाम: ॥८२॥

बृन्दा—इति तौ तथा कुरुत: ।८३॥

कृष्ण:—प्रिये राधिके परमशीततरमिदं कैरवदलासनं तदुपविश्यात्रानन्दं मां विवर्द्धय ॥८४॥

बृन्दा—इति तत्रोपविश्य यथाकामं कामलीलां जनयतां तौ । तदा संश्लिष्टदोर्लतौ यतस्ततस्तन्मनोज्ञपुलिने विविधकुसुमकुमुदसौगन्ध्यरभसमिलितशिलीमुखकुलविवशशीतकलानिले चरतां तस्थौ । एवं तद्विहारसुखपूरितान्त: करणौ द्वौ पुनस्तन्स्थले संप्रापितां । तदा ललिताद्या: सख्यो विरच्य सुन्दरमालाद्वयं कृष्णस्य राधायाश्च कंठे समर्पयन् । तदा परमानन्दिता राधा स्वगृहमगात् कृष्णोऽपि सुवलमाहूय व्रजमागतम् ॥८५॥

[ इति यमुनापुलिनबिहार: ]

इति श्रीकृष्णकौतुके ऋतुविहारवर्णनेऽष्टम: सर्ग: ॥

-:०:❀:०:-

## ❀ नवमः सर्गः ❀

नन्दिनी-सर्वर्त्तुषु विहारो वै श्रुतो देवि मयाद्भुतः ।
मग्नानन्दरसे येन त्वं नाहं धर्त्तुमुत्सहे ॥१॥
अन्यामपि हरेर्लीलां परमानन्ददायिनीम् ।
वक्तुमर्हसि मां देवि ! कुतुकान्वितचेतसा ॥२॥
कथं राधा हरेर्वंशीं नितरां प्राणवल्लभाम् ।
अदात् तस्मै च तत्सर्वं कौतुकं वद मां खलु ॥३॥
वृन्दा—राधिका कृष्णसद्वंशीं समादाय तदा सखि !
उपलम्भप्रयोगेन तामुवाच संविस्मयम् ॥४॥
राधा-किं त्वया चरितं भद्रे सुकृतं पूर्वजन्मनि ।
नितरां यत् पिबस्यालि ! कृष्णाधरसुधारसम् ॥५॥
शेषं ददामि सर्वासां गोपीनां च यथेच्छया ।
कामं प्रलोभिनी त्वं नो यद्वंचयसि तत्सुखम् ॥६॥
त्वया सर्वा व्रजे नार्य्यो मोहिताश्चालिता गृहात् ।
न तासां गृहकार्य्येषु मति र्भवति काचन ॥७॥
त्वन्नादमादितास्ताश्च वार्य्यमाणाः स्वबान्धवैः ।
न तिष्ठन्ति कथंचिद्धा विध्वस्तनिखिलार्गलाः ॥८॥
साम्प्रतं त्वं तु मे हस्ते संप्राप्ता विश्वमोहिनि ।
कथं यास्यसि तत्पार्श्वे स्वविद्यां विस्मृतुं व्रजे ॥९॥
वृन्दा—एवं वदन्ती तां राधा संप्राप्ता सूर्य्यमन्दिरे ।
रविं पूजयितुं तत्र निजालीभिः समावृता ॥१०॥



वीक्ष्यमाणश्च तत्रासीद्राधायाश्चागमं हरिः ।
समाक्रष्टुं च गोसंघं स्ववंश्यधिगमाय च ॥११॥
राधापार्श्वेऽथ गोविन्दः संप्राप्य प्रश्रयांचितः ।
अवोचन्मधुरं भद्रे तन्मुखार्पितलोचनः ॥१२॥
कृष्णः--राधिके देहि मे वंशीं गृहाण निजभूषणम् ।
यत्सुरभ्यस्तृषां प्राप्ताः संभ्रमन्ति वने वने ॥१३॥
राधा--मया तत्रैव संक्षिप्ता स्वयं गत्वा बिलोकय ।
करालां व्यालपत्नीं यन्स्वपाणौ रक्षतीह का ॥१४॥
हस्तमात्रं स्ववंशं यन्समं सूचयसि ध्रुवम् ।
अमूल्यानां भूषणानां गोविन्द त्वं वदामि किम् ॥१५॥
कृष्णः--तस्य मूल्यमलं राधे त्वं जानासि यथाविधम् ।
किञ्चिद् गोकुलनार्य्योऽपि किं बदामि यतः स्फुटम् ॥१६
वृन्दा-संमृश्य तद्गुणं राधा किंचिल्लज्जांचितेक्षणा ।
प्राह कृष्णं साभिलाषं कौतूहलपरायणा ॥१७॥
राधा—वंश्यास्तवाद्भुतं देव मोहनत्वं श्रुतं मया ।
तस्या रवसमाकृष्टा मुह्यन्ति वनजन्तवः ॥१८॥
किमयं तत्प्रसंगो वै सत्यमस्ति व्रजेश्वरः ।
तन्मां बिलोकयस्वैतत्कौतुकं कुतुकान्विताम् ॥१९॥
अहं गत्वा च तत्रैव तुभ्यं कृष्ण कुतोऽपि वा ।
अन्वेषयित्वा त्वद्वंशीं ददादि मधुसूदन ॥२०॥
कृष्णः-मयापि दृष्टो यद्राधे तेषां मोहोप्यनर्गलः ।
न जाने तेऽपि हि कथं तन्नादलुब्धमानसाः ।२१॥
राधा-प्रेषितास्ति मया वंशीं द्रष्टुं तत्र बिशाखिका ।
यद्यो नेष्यति तां सा तु दास्येते नन्दनन्दन ॥२२॥
वृन्दा—वंशीमण्डितहस्ता सा बिशाखा तत्र चागमत् ।
कृष्णाय व्याददाद्राधा बिनोदाक्लृप्तमानसा ॥२३॥

अधरे विनिवेश्याथ कृष्णस्तां समवादयत ।
मुरलीं तद्रवाकृष्टाः प्राप्तास्तत्र बनेचराः ॥२४॥
क्षोभाकुलकरं गाश्च दन्तैर्दष्टहरिततृणाः ।
पश्यन्तोऽथ हरिं प्रेम्णा पिबद्वेणुरवामृतम् ॥२५॥

खगा विपन्ना इव च संप्राप्ताः मोहमद्भुतम् ।
पदे लुठन्ति कृष्णस्य पांशुपूरित विह्वलाः ॥२६॥
एवं तु राधया भद्रे वंश्या मोहोप्यपूर्वकः ।
धैर्य्यमालम्ब्य गोविन्दं स्वयं मोहं समापिताः ॥२७॥

मुहुः कृष्णस्य वदनं बिलोकयति मोहिता ।
दृष्टो बनौकसो येनस्मित्वा प्राह तु राधिका ॥२८॥

राधा—मादृशीनां तु गोपीनां मोहनेषु किमद्भुतम् ।
पशवो पक्षिणो यस्मान्मोहिता निजवेणुना ॥२९॥
शंकितास्मि यथा नाथ शीघ्रं यामि स्ववेश्मनि ।
इन्द्रजालस्य विद्याया वंशिकाध्यापिका भव ॥३०॥

सा स्वका तु यथा भूता प्राप्ता वंशी मनोहर ।
दीयतां भूषणं मे यद्धारोऽयं परिलम्बते ॥३१॥

कृष्णः—हृदये मम यो राधे हारो मुक्ताञ्चितस्तव ।
ताराबलिरिवाभाति कथं तुभ्यं ददामि तम् ॥३२॥

राधा—कथं हृदि स्थितं भावं गोपयित्वाथ गद्यते ।
चन्द्राबली च वक्तव्या या तुभ्यमतिरोचते ॥३३॥

कृष्णः—आवलीं तु छलनैव किं मुधा परिशंकसे ।
राधे त्वत्तो न मे काम स्वप्राणोऽप्यनिबल्लभः ॥३४॥

राधा—बाणीमया तु कल्याणी देवी किंचिकदाचन ।
किं मिथ्या वै वदत्यंग मया ज्ञातं तवेङ्गितम् ॥३५॥

वृन्दा--एवं भृकुटिभंगेन संरम्भरतिनिर्भरा ।
कृष्णं बिलोकय सहसा राधिका स्वगृहेऽगमत ॥३६॥



तदा कृष्णोऽपि साश्चर्य्यं बिलोक्य चटुलं सखि ।
किमिदं च त्रूवन्मोहात्प्राह तं तद्विचेष्टिता ॥३७॥

कृष्णः—कथं मिथ्याप्रयोगेन कदर्य्यं मम मानसम् ।
स्वहठेन कृता राधा सा गमन्निजमन्दिरम् ॥३८॥

किंवा किंचित्त्वया दृष्टं मयि चात्र विलक्षणम् ।
यस्माद्वचनमात्रेण गता सानर्गला गृहम् ॥३९॥

चटुलः--प्रकृत्या सुकुमारी सा प्रिया कुमुदिनी तव ।
सरलापि मन्नामहि श्रुत्वा संम्लापिता यतः ॥४०॥

तत्समाश्वसिहि प्रेष्ठ कथं त्वं परितप्यते ।
वहुर्नात्र विरोधो यस्त्यक्तस्नेहा भविष्यति ॥४१॥

वृन्दा--चटुलेन हरिस्तव तोषितोऽविधा वा याम् ।
तदा धेनूः समाहूय समपायद्वै सलिलं ॥४२॥

इति राधा हरेः संगान्संप्राप्ता स्वगृहं सखि ! ।
सोत्साहाप्यथ तत्पार्श्वगन्तुं प्राह तदा सखीम् ॥४३॥

राधा—कदर्थितः कथं मिथ्याप्रसंगेन मया सखि !
हृत्तडागो हरेस्तस्मान्म्लास्यते वै तदम्बुजम् ॥४४॥

स कृष्णः कोटिनारीणां बल्लभः किल गोकुले ।
ज्ञात्वा मयि गुणावद्यं त्यक्तरागो भविष्यति ॥४५॥
किम्वा साधारणं स्नेहं धास्यते मयि कोविदः ।
ईर्ष्यावशान्कथं गोष्ठे स्थास्याम्यहमहो तदा ॥४६॥

करपद्मेन किं मह्यं पुरा दत्ते स वीटिकाम् ।
मया न दृश्यते क्रोधात्पुनर्दयेऽपि किं प्रियम् ॥४७॥
भीत भीत इवागत्य कदाचित्करपल्लवम् ।
स गृह्णाति मया दृष्टः पुनस्त्यजति तत्कुतः ॥४८॥
अपि वाञ्छति मे हारं स्प्रष्टुं हृदयलम्बितम् ।
भ्रूभंग्या तु मया दृष्टोऽपसर्पति विशंकितः ॥५०॥

मम वक्त्रे दत्तनेत्रो नितान्तं परिलोभितः ।
तथाप्ययं नतग्रीवो चकोर इव ताम्यति ॥५१॥
स्वयं निर्मितशय्यायां सुगन्धकुसुमाकरैः ।
निवेशयति मां स्मित्वा शनैस्तत्र कुत्रोऽद्य सः ॥५२॥

प्रणयी यश्च शय्यायां हारं मे हृदि मण्डनम् ।
वाञ्छत्यत्र रंगेनैव स कथं नयते क्षणम् ॥५३॥
किं पुन हृदये ऽयस्य शक्ररत्नसमोपमम् ।
शातकुंभोपमं स्वांगं मण्डयिष्ये विशाखिके ॥५४॥

तं वा नवाम्बुदश्यामं कदा चपलया त्विषा ।
शोभयिष्ये त्वहमुक्तामालाया वक्शोभया ॥५५॥
अम्बराभांगदीप्तयो नीलाम्बरघने तमे ।
पिहितो भास्यते किं वा रविकौस्तुभसंयतः ॥५६॥

तस्य पिंगांशुकेनाहं स्वर्णवर्णकलेवरा ।
सौदामिन्या सुमेरुर्वा शोभयिष्ये कदाचन ॥५७॥
विशाखा—मिथ्यासंरम्भसंपन्ने किं विसीदसि चित्रधा ।
स्वकृतं तु यथा कर्म स्वयं तत्परिभुज्यताम् ॥५८॥
किमागोऽपि हरेरत्र यत् त्वया परिरोपितम् ।
त्वच्छोभां वर्णयन्नेव सापराध इवांचितः ॥५९॥
कथं हि क्लाम्यते मुग्धे तूष्णीं भूत्वा स्थिता भव ।
किमिदानीं त्वया कर्त्तुमिष्यते वद मां प्रति ॥६०॥
राधा--स्वकर्मणैव यद्यपि धैर्यमालम्ब्यते सखि ।
तथाप्येतन्मनो मे तत्पार्श्वं गन्तुं प्रधावति ॥६१॥
स्पृहां च जनयत्यालि तत्स्वरूपे मनोहरे ।
अपि तस्य विहारेषु किं करोमि ततः सखि ॥६२॥
वृन्दा—एवमुत्कण्ठितां राधां समालोक्य विशाखिका ।
ललितां प्राह तच्चेष्टां दुस्तरां तद्वियोगतः ॥६३॥



विशाखा--कृष्णं विना कथञ्चिद्वा राधा धैर्यं ददाति न ।
अस्य विरहचेष्टां त्वं गत्वा कथय वै हरिम् ॥६४॥
वृन्दा—म्लानवक्त्रेव ललिता गच्छंती यमुनातटे ।
प्रापत्मा तत्र गोविन्दं पाययन्तं जलं च गाः ॥६५॥

कृष्णः--गच्छसि त्वं क्व ललिते विमनस्कैव दृश्यसे ।
किमाकूतिं न जानेऽहं तद्वदस्व यथाविधि ॥६६॥
ललिता--राधिकायाः प्रसंगेन कामं दग्धास्म्यहं बत ।
दिने दिने तु तस्या यन्मोहोऽस्ति परमाद्भुतः ॥६७॥

कृष्णः—ललिते किं बदत्याली राधिका हारकांक्षिणी ।
तद्विचेष्टां यथार्थं मां कथयस्व विचक्षणे ॥६८॥
हृदयाज्जम्बितस्तस्या हारो मारकतोज्वलः ।
प्रमादात्तं बने क्षिप्त्वा साम्प्रतं परिताम्यति ॥६९॥

ललिता--भवदुद्देशमासाद्य स्वहारं हृदि लम्बिनम् ।
परिशोचति खिन्नांगी किं बदामि बिलक्षणाम् ॥७०॥
मरकतस्वर्णयोगात्स्वं त्वां च विनिरूप्य सा ।
बिद्युद्घननिभं वापि तादृशं परिशोचति ॥७१॥

कदाचिच्च तया नाथ मोहादुक्तमनर्गलम् ।
तेनैवोऽपेक्षिता चाहं किं करोमि बिशाखिके ॥७२॥
इति तस्येंगितं ज्ञात्वा मया संतर्कितं बिभो ।
तव बिश्लेष एव तां बिषादयति निश्चितम् ॥७३॥

कदाचिद्भक्ति दग्धास्मि तद्वयं तस्य शान्तये ।
पटीरघनचर्चाभिर्लिम्पामस्तां ततोऽधिकम् ॥७४॥
अपि जल्पति मां कुंजे नयतानिलदारुणः ।
संम्लापयति मे देहमुक्त्वा कामं प्रतप्यते ॥७५॥
दृष्ट्वा चन्द्रं चिरं लब्धसंज्ञा भवति मोहन ।
कोकिलानां रवं श्रुत्वा कर्णौ च्छादयति स्फुटम् ॥७६॥

उद्गच्छति कदाचिन्सा व्रजत्यपि क्वचित्खलु ।
क्वचिज्जल्पति ते नाम क्वचिद्धसति मूर्च्छति ॥७७॥
क्वचिद्रोदिति साटोपं क्वचित् क्रन्दति दुःखिता ।
विपरीतगतिं प्राप्ता तन्वी विश्लेषदुःसहा ॥७८॥

त्वयैव साध्या गोविन्द राधा विरहकातरा ।
दष्टा विरहसर्पेण पायय स्वाधरामृतम् ॥७९॥
लतापाशं गृहीत्वा वै वयं सर्वाश्च तां बिना ।
यमुनायां प्रवेश्यामः किं बृथा जीवनं बिभो ॥८०॥

वृन्दा—एवमुक्त्वा तु ललिता परिरोदिति तत्र हि ।
राधादुःखेन संतप्ता तन्सुखेन सुखाञ्चिता ॥८१।
अवधार्य्य हरिस्तस्या ललितायास्तदेरितम् ।
सान्त्वयन् तां तदा प्राह राधाकेलिपरायणः ॥८२॥

कृष्णः—कामं क्लिष्टास्ति राधा वै विरहेण च मां विना ।
तूर्णमानय खिन्नांगीं ललिते तां सजल्पनैः ॥८३॥
समाश्वास्य च मद्वाक्यै राधिकां प्राणवल्लभाम् ।
इह वेत्रवतीकुंजे संस्थितोऽहं तवाशया ॥८४॥

वृन्दा—एवमानन्दिता भद्रे ललिता हरिणा तदा ।
राधामासाद्य तां तस्य लक्षणं चाभ्यवर्णयत् ॥८५॥

ललिता—खिद्यसे त्वं कथं राधे कृष्णस्त्वद्विरहेण वै ।
नित्यं बसति कान्तारे त्यक्त्वा मोहनमन्दिरम् ॥८६॥
यत्र तत्र भ्रमत्यालि सुरभीर्रतिविह्वलः ।
न समाह्वयते कृष्णस्त्यक्तवेणुर्यतः खलु ॥८७॥
त्वां ध्यायति रहः कुंजे त्वन्नामग्रहणे रतः ।
त्वां स्मरत्येव हृद्वृत्त्या त्वमेब सकलं जगत् ॥८८॥
आकारितासि कृष्णेन त्वं राधे कुंजमन्दिरे ।
तापं त्यक्त्वा समुद्गच्छ शिशिरीकुरु लोचने ॥८९॥



वृन्दा—इति राधा समाश्वास्य सा तया मृदुजल्पनैः ।
उत्साहिताभिसाराय चिरविश्लेषदुःखिता ॥९०॥
तदा सख्यौ समादाय राधिकां कुंजमन्दिरे ।
मुदितेऽनयतां ते तां स्वप्रियाहितचिन्तके ॥९१॥

दूरान्संभावयंत्यस्ताः कृष्णश्चात्र परिस्थितः ।
तत्र सर्वाः समागत्य दृष्ट्या विस्मयमाप्नुबन् ॥९२॥

राधा—ललिते स क्व ते मित्रं वहुबल्लीसुबल्लभः ।
अलिस्त्वं तेन धूर्त्तेन वंचितासि यथेच्छया ॥९३॥

अहं जानामि तद्भावं कामिनीकुलमोहनम् ।
न कस्यामपि निर्मोहः स्नेहं धत्ते निरर्गलम् ॥९४॥
तेनापि वंचिता त्वं वै बचनैः सुमनोहरैः ।
यद्विश्रम्भेण मां नेतुं धाबिताभूरकोबिदा ॥९५॥
न तर्कितं त्वया सम्यक् तस्य सद्भावलक्षणम् ।
कुहकं कर्म तद् दृष्ट्वा सत्यं ज्ञातं त्वया सखि ॥९६॥

क्षिप्रमुद्गच्छ मुग्धे त्वं गृहं यामि यतः क्वचित् ।
न दृश्यते चोपदेष्टा वंचिताहं स्वकर्मणा ॥९७॥

ललिता—अनीदृशं कथं त्वं हि संभावयसि बालिशे ।
सोऽपि कौतूहलपर इह लीनो भविष्यति ॥९८॥

ताबन्स्वपाणिना राधे शय्यां रचय चाद्भुताम् ।
नानाप्रसूनरचनां दृष्ट्वा तुष्यतु यां हरिः ॥९९॥

वृन्दा—ललिताबचनं श्रुत्वा धैर्य्यमालम्ब्य राधिका ।
तल्पकल्पनविद्यायां प्रवृत्ताभूच्च नन्दिनि ! ॥१००॥
विशाखया मण्डिताश्च सुगन्धकुसुमैस्तदा ।
तस्याः सुमूर्द्धजा भद्रे भूषणैश्चापि भूषिता ॥१॥
इति रात्रौ व्यतीतायां राधा विस्मयसंकुला ।
चिन्तयन्ती हरेस्तस्यागमं प्राह तदा सखि ॥२॥

राधा--न चाद्यापि समायातः स धूर्त्तो बनचारकः ।
कयाप्यलोभि लावण्यैः पद्मिन्या मधुसूदनः ॥३॥
ललिते ते हठेनैव रुद्धया लतिकागृहे ।
मया प्रसेविता शय्या मुग्धा किं चात्र संस्थिता ॥४॥

वृन्दा—एवं सा ललितामुक्त्वामर्षाद्दष्टाधरा सखि ।
संबीक्षती च सर्वांगमत्यजत्कुसुमाकरम् ॥५॥
अतिकेशवशे प्राप्ता संरम्भाच्चतदाक्षणा ।
उच्चैः श्वासान्संवहंती तूष्णीभूता स्थिता भवत् ॥६॥
सख्यौ तत्क्रोधसंत्रस्ते न बोभे बदतस्तदा ।
अपि मौनं समालम्व्य स्थिते तत्रैब नन्दिनि ॥७॥

नन्दिनि-ललितां प्रेषयित्वा स कृष्णो राधापरायणः ।
क्व गतश्च तदा देबि वृत्तान्तं मां बदस्व वै ॥८॥
सोऽपि राधातिविश्लेषादुक्तः कामवशं गतः ।
भवत्या तु कथं त्यक्त्वा संकेतं यद्गतोऽन्यतः ॥९॥

वृन्दा—अयि नन्दिनि सारङ्गे साधु पृष्टं त्वयानघे ।
वदामि त्वां यथार्थं वै बृत्तान्तं परमाद्भुतम् ॥१०॥
उक्तं च यन्मया पूर्वं पद्मा चन्द्राबली सखी ।
छलेन दोलालीलायां चटुलेनैव मोहिता ॥११॥
तया चोत्साहिता गत्वा सखी चन्द्राबली स्वयम् ।
आयास्यत्यत्र कृष्णो वै धेनूंश्चारयितुं खलु ॥१२॥
चिरादुत्कण्ठितां तां च तद्दुःखपरिदूषिताम् ।
पद्मा तस्या सखी प्रापच्चटुलं विपिनान्तरे ॥१३॥

पद्मा-सत्यं चटुल बच्मि त्वं तव वाक्यमपूर्वकम् ।
निधाय हृदये सा तु चन्द्राबल्यति ताम्यति ॥१४॥
तस्याः कष्टं समालोक्य स्वयं धर्त्तुं कथंचन ।
न शक्नोमि ततो मित्र ह्युपकारो विधीयताम् ॥१५॥



चटुलः-अभिसारय शीघ्रं त्वं कृष्णं चन्द्रावलीं खलु ।
निवेदयाम्यहं तस्मै तिष्ठ पद्मेऽत्र निश्चिता ॥१६॥

वृन्दा—चटुलः कृष्णमासाद्य प्राह प्रश्रयसंनतः ।
सत्यं कर्त्तुं स्ववचनं चन्द्राबल्याः सुखाय च ॥१७॥

चटुलः--व्रजेश्वर त्वद्विरहे चन्द्राबल्यति ताम्यति ।
अभिसारं करोम्यत्र तस्यास्त्वत्पार्श्वके व्रत ॥१८॥

कृष्णः--ललिता साम्प्रतं प्रेष्ठगता नेतुं च राधिकाम् ।
कथं चन्द्राबलीमत्र त्वमानेष्यति तद्वद ॥१९॥

चटुलः--क्षणमेकं च नाथास्याः सुखं दत्वाबलोकनैः ।
पुनस्तां प्राणवत्प्रेष्ठां राधां प्रति मुदं कुरु ॥२०॥

चटुलस्याबरोधेन कृष्णेनोक्तं समानय ।
तेन सा प्रेषिता पद्मा नेतुं चन्द्राबलीं ततः ॥२१॥
सोऽचिन्तयत्तदा कृष्णः किं कर्त्तव्यं मया खलु ।
तद्वेत्रबतीनिकुंजे चन्द्राबल्यागमिष्यति ॥२२॥

पूर्वं च तव मानोऽस्मिन् संप्राप्ता तत्र नन्दिनि ।
चन्द्राबली च स्नेहाढ्या हरौ वार्पितमानसा ॥२३॥

चंद्रावली-कामं संत्यक्तरागोऽसि स्वस्य कार्य्यस्य साधक ।
न च कस्यापि दुःखेन वाधितः संभवत्यलम् ॥२४॥

कृष्णः—प्रिये तब सुनामानि मालां कृत्वा बहामि वै ।
चन्द्रावलीमिव हृदि त्वत्तः काप्यगित मे प्रिया ॥२५॥

वृन्दा---एवं चाटूक्तियुक्त्या वै नन्दयित्वा च तां हरिः ।
नीत्वा दैत्यलतागेहे प्राप लीलां मनोजजाम् ॥२६॥
अप्राप्ते च प्रभाते तां प्रेषयित्वा च सादनम् ।
स्वयं तत्संगरंगाप्तः संप्राप्तो यत्र राधिका ॥२७॥
आयातं च समालोक्य दूरात्कृष्णं विशाखिका ।
अदर्शत् ललितं तं च स्फुरन्मकरकुण्डलम् ॥२८॥

ताबत्तत्रैव संप्राप्तः सर्वविद्याविशारदः ।
ललितां प्राह संरम्भान्निद्राघूर्णितलोचनः ॥२६॥

कृष्णः---किं त्वया ललिते कामं कौटिल्यं परिशीक्षितं ।
यन्मया निजसंकेते सर्वा संवाहिता निशा ॥३०॥

सूर्य्यपूजनकालं तु नातिदूरं बिलोक्य वै ।
आयातां राधिकां नीत्वा कौशल्यं किं वदामि ते ॥३१॥

ललिता--अपि युक्तं च ते कृष्ण तनितुं वाक्यपाटवम् ।
त्वयमस्माननादृत्यातिनीता शर्वरी क्व वा ॥३२॥

उपालब्धुं समायातो वैपरीत्येन मोहन ।
अथोदितस्वकर्माणि भविष्यन्ति स्फुटानि ते ॥३३॥

कृष्णः---राधे त्वमेव ललितां यथायोग्यं वितर्कय ।
विस्मृत्यैव हि संकेतमन्यतः प्रस्थिता यतः ॥३४॥

चैत्यबत्यकुंजे यत्तु कृतसंकेतमुत्तमम् ।
अनया वेत्रबत्या त्वमानीता हि विचक्षणे ॥३५॥
किमप्यत्रापराधो मे वद सुन्दरि ! मां प्रति ।
कामं कामस्य कांडेन पीडितोऽहं मुदं वह ॥३६॥

राधा---धूर्त्तानां हि शिरोरत्नं मन्यन्ते त्वां व्रजे खलु ।
किमत्र वंचने सिद्धिः प्रकृत्या मुग्धचेतसाम् ॥३७॥
कस्मादाच्छाद्यते धूर्त्त हृदयं परिमण्डितम् ।
चन्द्रावलीनखवल्या किमन्यं त्वां बदामि वै ॥३८॥
व्रणोऽपि शोभते काममधरे तब मोहन ! ।
पक्वबिम्बफले किञ्चित्कीरचञ्चुक्षतं यथा ॥३९॥
तस्या एवांगरागेण सर्वांगं परिमण्डितम् ।
आवृणोषि कथं चित्र त्वं सौगन्धारभसान्वितम् ॥४०॥
कौतत्रेन यथा योग्यं रचितं ते कलेवरम् ।
तस्मात्कामं पश्यामस्त्वं कामस्यहि सखा यथा ॥४१॥



किं त्वया ललिते चैतद्दृश्यते नहि किंचन ।
तत्कथं संस्थिता चात्र दृष्टमस्य सुलक्षणम् ॥४२॥
अपि तामेत्य गोविन्द मुदं याचस्व वाञ्छितम् ।
यया चैव तु सर्वांगे चित्रितोऽसि यथा सुखम् ॥४३॥

वृन्दा—इत्यालम्ब्य विशाखायाः हस्तं राधा तदा सखि ।
मार्त्तण्डस्य मठे प्राप्ता पूजनायोदये सति ॥४४॥

कृष्णः--त्वया कथञ्चिल्ललिते साधिका राधिका पुरा ।
इदानीं तु न शक्ता वै साधितुं तां तु काचन ॥४५॥

वृन्दा—इति कृष्णः संचिन्तार्त्तः संविचार्य्य च तद्गृहम् ।
किं करोमि क्व गच्छामि चिन्तयन्प्राविशत् क्वचित ॥४६॥
निविडे लतिकाजाले सुगन्धकुसुमार्च्चिते ।
गुंजन्मत्तरसासक्तशिलीमुखकुलाकुले ॥४७॥
तत्र तां हृदये कृष्णो यथाभूतामचिन्तयत् ।
तस्याः प्रेमवशं प्राप्तः सरोजमिव खद्गदः ॥४८॥

कृष्णः—सत्यं तया समाज्ञातं चन्द्राबलिरतोऽप्यहम् ।
निवर्त्तयिष्यति स्नेहात् किं करोमि ततः खलु ॥४९॥
कलहान्तरिता तन्वी दुःखं प्राप्य यथा तथा ।
नायास्यत्यथारण्ये क्रीडयिष्ये स्ववेश्मनि ॥५०॥
क्षमापयितुमागःस्वं स्वयं यामि तदन्तिके ।
अथवा कामदो तत्र प्रेषयामि स्वदूतिकाम् ॥५१॥

प्रतिकूलास्ति मे रामा ततः किं देहदैहिकम् ।
किं मित्रं किं सुहृद्बन्धुरिति सर्वमनर्थकम् ॥५२॥

वृन्दा--एवं मया श्रुत्वा तत्र कृष्णचिन्तातिदुस्तरा ।
तदुपेत्य शनैः कृष्णमुक्तं तद्विस्तरोपायम् ॥५३॥

कथं चिन्तयसे नाथ प्रसंगमतिदुस्तरम् ।
राधां तब प्रियां क्षिप्रमहं सम्प्रापयामि वै ॥५४॥

त्वं चिन्तां त्यज गोविन्द तस्या गच्छामि पार्श्वकं ।
बोधयित्वा सुवाक्येन प्रापयामि तवान्तिकम् ॥५५॥

कृष्ण:—कामं तप्तास्ति सा राधा चिरेण विरहेण मे ।
वृन्दे त्वमेव तां शीघ्रं साधयित्वा समानय ॥५६॥

अत्रैव संस्थितोऽहं वै त्वदागमनवाञ्छकः ।
तद्गच्छ शीघ्रं भद्रं ते मम सर्वार्थसाधिके ॥५७॥

वृन्दा—कृष्णमाश्वास्य वचनैः सम्प्राप्ताहं तदा सखि ।
यत्र राधा निजालीभ्यां संस्थिता किल नन्दिनि ॥५८॥

मां दृष्ट्वा खलु ताः सर्वा समुत्थायाभिनंदयन् ।
आसने च मां तत्र वै छलेनैवमतोषयन् ॥५९॥
तदा पृष्टा मया भद्रे ललितापि छलेन वै ।
म्लानेवास्ति कथं राधा ललिते कारणं वद ॥६०॥

ललिता—किं वदामि यथार्थं त्वां शृणु देवि समाहितम् ।
यत् कृष्णः स्वछलेनैनां कुमारीं वंचयत्यलम् ॥६१॥
तदेषा सुकुमाराङ्गी चरितैस्तस्य दारुणैः ।
म्लायते मूर्छिता देवी तस्मात् त्वां शरणप्रदा ॥६२॥
सोऽपि कृष्णो मया दृष्टो राधाविरहदुःखितः ।
विह्वलोत्यंतमोहेन लुठते यमुनातटे ॥६३॥
स्वां वंशीं न स्मरत्येवं सुहृद्वृन्दं च गोगणम् ।
अपूर्वां स दशां प्राप्तस्तन्छंके भयशंकिताम् ॥६४॥
मालां व्यालवदाज्ञाय क्षिपते निजकण्ठतः ।
कृसानुसदृशं वस्त्रं दूरेकृत्वा न पश्यति ॥६५॥
वयस्यास्तस्य विविधैः शैत्योपायैः समं ततः ।
शैत्यं विदधतेऽथापि तापो न परि शाम्यति ॥६६॥
मुहुः कुंजे प्रकुंजेऽपि मोहात् द्राधां विलोकयन् ।
विशत्यपि तदप्राप्तौ विह्वलः परिशोचति ॥६७॥



कृष्णस्य भीषणां काष्ठां विलोक्याहमजानती ।
प्राप्ता राधां प्रवक्तुं च यथोचितं तदन्तिके ॥६८॥
प्राणप्रेष्ठस्तु गोविन्दः किं युक्तं सभयानकम् ।
क्षणं प्राप्तस्ततो राधे शीघ्रं तस्य मुदं कुरु ॥६९॥

त्वद्बद्धहृदयः स त्वां बिना कामपि कमिनीम् ।
मनसि नेदयते चैतं परिष्वज्य सुखं वद ॥७०॥
त्वं यतो रूपसीमासि सत्वसौ रूपसागरः ।
द्वयोश्च संगमे राधे दृश्यते फलमुत्तमम् ॥७१॥

एवं मद्वचनेनैव निशम्योऽसौ हरेर्दशाम् ।
प्रणयव्याप्तहृदया किंचिच्चलितुमुत्सुका ॥७२॥
ललितासंमते भद्रे गृहीत्वा राधिकाकरम् ।
समुत्थाय मया नीता कृष्णांतिकामियं हठात् ॥७३॥

तत्कुञ्जमन्दिरं भद्रे प्रसूनैर्विविधैस्तदा ।
मण्डितं हरिणा चित्रं नानाकलाविधानतः ॥७४॥
रचिता निजहस्तेन कुसुमैर्नव-पल्लवैः ।
शय्या सातिमनोज्ञा वै कृष्णेन सुखदायिनी ॥७५॥

साभिलाषं च मे मार्गं पश्यन् सचकितेक्षणः ।
दूराद् दृष्ट्वा तु मां कृष्णः परमाह्लादसंवृतः ॥७६॥
प्रत्युद्गत्य तदा कृष्णः प्रेश्रयानतकंधरः ।
विलोकयन प्रियावक्त्रमानयन तां लतालये ॥७७॥

अभिनंद्य वचोभिर्मां मधुरैः साहि नन्दिनी ।
ललितां च विशाखां च विशेषादभ्यनंदयत् ॥७८॥
तदा राधां सुवचनैः कोमलैर्नंदनंदनः ।
अबोधयन् सविनयं मनोजवशतां गतः ॥७९॥

कृष्णः—त्वां विनाहं प्रिये सर्वं त्रैलोक्यमपि दृष्टिगम् ।
शून्यं पश्यामि नितरां शये तुभ्यं न संशयः ॥८०॥

मयि कस्मात्त्वया भद्रे मनसा चापि किंचन ।
स्वाधीनं क्रियते कोपः खेदस्त्वां बाधते यतः ॥१८१॥

न युक्तो वशगे दंडो न त्याज्यः शरणं गतः ।
तृषार्त्ताय जलं देयं रुग्ग्रस्ताय तथौषधम् ॥८२॥

नाथः कुप्यति भृत्याय निरोधुं तस्य किं बलः ॥
स एव करुणापूर्णः परितोषयति स्वयम् ॥८३॥

स्नेहदाम्ना तवाहं यद्दृढवद्धोऽस्मि राधिके ।
न चापि चलितुं शक्तस्त्वां विना व्रजमण्डलात् ॥८४॥

विमुखीं वीक्ष्य राधे त्वां मयि सर्वेऽनुकूलगाः ।
प्रतिकूल्यात्परं मभून्मरुच्चंदनचन्द्रकाः ॥८५॥

मनोजो लब्धमार्गो यत्करोति मयि यातनाम् ।
अद्य त्वत्पादमाश्रित्य त्यक्ष्यामि किल तद्भयम ॥८६॥

इदं साहाय्यकं नित्यं मम कुंजनिकेतनम् ।
यस्मिन् तवागमं राधे वाञ्छितं तु मया व्रत ॥८७॥

त्वद्विश्लेषज्वरेणालं तापितोऽस्मि निरन्तरम् ।
किंचिद्विलोक्य सुदृशा शिशिरी कुरु मां सखि ! ॥८८॥

अन्तः प्राप्तनिदाघं मां निजेनाधरसीधुना ।
प्रशान्तय कृपापूर्णे चिरात्त्रृषितचातकम् ॥८९॥

वृन्दा—एवं तां वाग्विलासेन लोभयित्वा च भामिनीम् ।
संप्रापयन्सुशय्यायां सर्वविद्याविशारदः ॥९०॥

वैदग्धीवलितौ भद्रे राधाकृष्णौ मुदान्वितौ ।
रेजतुर्यथाकामं तौ कामशास्त्रार्थकोविदौ ॥९१॥

रन्ध्रजालेऽपि तल्लीलां समालोक्य यथाविधम् ।
तन्सख्यश्च मया सार्द्धं परां मुदमवाप्नुवन् ॥९२॥

कामलीलापरिश्रान्ता कामं कृष्णाभिनन्दिता ।
कृष्णं प्राह तदा राधा स्वाधीनपतिका सखि ! ॥९३॥



राधा—सुष्ठु संयमिताः केशास्त्वया मे व्याकुलीकृताः ।
पुनः पुष्पकलापैस्त्वं प्रकल्पय यथा पुरा ॥९४॥

समारोपय मे कण्ठे हारं मुक्तागणाञ्चितम् ।
कुचौ चित्रय चार्व्वंग सुकुरंगमदेन वै ॥९५॥

यथा पूर्व्वं पुरा कृष्ण भूषणानि त मे खलु ।
तेषु तेष्वेव देशेषु समारोपय तद्विधिम ॥९६॥

सख्यो मम यथा कस्मान्न जानंति निरर्गलम ।
इदं विक्रीडितं ते तु यद्धसिष्यन्ति मां खलु ॥९७॥

वृन्दा—श्वसस्तेन यथायोग्यं कृष्णः सर्व्वार्थकोविदः ।
अभूषयं च तां राधां तन्मुखार्पितलोचनः ॥९८॥

तस्याश्छबिं समालोक्य परमानन्दनिर्वृतः ।
अविस्मयत् श्रीगोविन्दः शृणु नन्दिनि ! तत्वतः ॥९९॥

कृष्णः—मुखमण्डलमेतत्ते ताटंकार्कप्रदीपितम ।
उद्योतयति हृद्देशकमलं तद् विलोकय ॥२००॥

तव भालशशी राधे कुरङ्गमदलाञ्छितः ।
रुचिं तनोति मे कामं चकोरे नेत्रसंज्ञके ॥२०१॥

कज्ज्वलाकलितनेत्र ते प्रचलत्खञ्जनद्युती ।
लोभं वर्द्धयतो मे तु स्ववक्त्ररचनैः सखि ॥२॥

किं वर्णयामि त्वद्रुपं यत्त्रैलोक्येऽप्यपूर्वकम ।
सुखं वर्द्धयसे राधे स्वदर्शनमहोत्सवैः ॥३॥

वृन्दा—एवमानन्द्य तां प्रेष्ठां कृष्णः केलिपरायणः ।
पुनराह मुदा युक्तो राधां तच्छृणु नन्दिनि ॥४॥

नातिदूरेऽस्ति कालिन्द्याः कूले कल्पतरूपमः ।
माकन्दो नित्यफलदः सुखदः सर्वदेहिनाम् ॥५॥

तत्र रन्तुं प्रिये कामं वांछाम्यद्य त्वया समम् ।
यौवतस्य सभायां त्वां नन्दयामि स्वविभ्रमैः ॥६॥

वृन्दा—इत्यभिमंत्र्य तां प्रेष्ठां समाहूय च मां तदा ।
ललितां च विशाखां च तत्र गन्तुमचिन्तयन् ॥७॥

उक्तवान्मां तदा कृष्णो वृन्दे गच्छ त्वमग्रतः ।
प्रकल्पय यथायोग्यं सभां त्रैलोक्यमोहिनीम् ॥८॥

अहं तदीरिता भद्रे सम्प्राप्ता तत्र निर्वृता ।
माकन्दमण्डपे भद्रे तच्छबिं वर्णयामि किम् ॥९॥
मण्डपायतविस्तीर्णो रम्यो माकन्दपादपः ।
परिपक्वफलव्रातैः परितः परिशोभितः ॥१०॥

कोकिलायाः सुमधुरनादेन परिपूरितः ।
सर्वर्त्तु सुखदो भद्रे नितरां सर्वकामदः ॥११॥
आचूलमूलं परितः स्वर्णरत्नैरलंकृतः ।
चत्वरस्तत्र लसन् वै मणिकांचननिर्म्मितः ॥१२॥
संवृतः कंजपालीभि मंडिताभिः प्रसूनकैः ।
मधुव्रतरवैः कामं रञ्जिताभिर्निरन्तरम् ॥१३॥
यमुनोपतटे रम्ये सोपानमणिनिर्म्मिते ।
चक्रवाकमरालाद्यैः सततं परिसेविते ॥१४॥
राकेन्दुकरसंदोहैर्नितरां परिशोभिते ।
मलयानिलसंसर्गान्सुखदेऽपि मनोहरे ॥१५॥
अपि तस्य तरोमूले विस्तृतं सुखदायिकम् ।
रत्नसिंहासनं दिव्यं कोटि सूर्य्यप्रकाशवान् ॥१६॥
नानाविधसुगन्धेन सुरभीकृतदिग्मुखः ।
रत्नैश्च दामप्रकरैः सुतरां परिदारितम् ॥१७॥
तावन्स स्वप्रियास्कन्धे संनिधाय मुदोलताम् ।
श्रीकृष्णस्तत्र संप्राप्तः परमानन्दनिर्वृतः ॥१८॥
तस्य शोभां समालोक्य कोकिलस्वनमिश्रितां ।
अदर्शयत्स्थलं राधां परां मुदमवाप्नुवत् ॥१९॥



वंशीमवादयत्कृष्णो युवतीगणकर्षिणीम् ।
तदा तन्नादसंमत्तास्तास्ताः सर्वा व्रजस्त्रियः ॥२०॥
कृष्णे प्रदत्तचित्ता यास्तद्दृशे त्यक्तदेहिकाः ।
विस्मारिताश्च साश्चर्य्यं प्राप्ता माकन्दमण्डपे ॥२१॥

रत्नसिंहासने दिव्ये समासीनौ व्रजेश्वरौ ।
विलोक्य राधिकाकृष्णौ परं मुदमवाप्नुवन् ॥२२॥
तासां नामानि रम्याणि श्रृणु मत्तः शुभाशये ।
या यास्तत्र समायातास्तल्लीलादर्शनोत्सुकाः ॥२३॥

चन्द्रास्या चंद्रवदना चंद्रलेखा विधूदया ।
चन्द्रवक्त्रा सुकेशी च चन्द्रकान्तिः शशिप्रभा ॥२४॥
चन्द्रालिका चन्द्रमाला चन्द्रविम्बा मनोहरा ।
रत्नाबली रत्नमाला रत्नकान्तिः रतिप्रिया॥२५॥

चम्पकांगी च स्वर्णाभा चपला मदनालसा ।
सुकंठी सुदंती गौरी भ्रूभंगा मधुरोदया ॥२६॥
भृंगाक्षी चंचलाक्षी च खंजनाक्षी सुलोचना ।
पद्माक्षी पद्मवक्त्रा च सुमुखी सुन्दरी तथा ॥२७॥

सुहारा सविहारा च सुकपोला नितम्बिनी ।
सुवादिनी सुकंठी च सुनासा मधुराधरा ॥२८॥
सुवेषा सुभगा चित्रा विचित्रा कोकिला तथा ।
हंसी शिखण्डिनी भृंगी मृगी गुंजा कपोतिका ॥२९॥

अन्याश्च वहवस्तत्र संप्राप्ताश्च व्रजांगनाः ।
पार्श्वप्रवर्त्तिकास्तासां वर्णयामि यथाक्रमम् ॥३०॥
ललिता च विशाखा च भद्रा चंद्रभगा तथा ।
तारा विलासिनी तन्वी कौमुदी च कुमुद्वती ॥३१॥
अहं तत्र यथेच्छं वै विचरामि तदग्रतः ।
मोदिता च तयोर्भद्रे वच नैर्मधुरोदयैः ॥३२॥

मणिनिर्म्मिततद् दण्डं सर्वत्र मणिगुम्फितम् ।
बहुमुक्तावलीयुक्तं छत्रं तारा दधत्तदा ॥३३॥
चमरौ वीजयन्त्यौ द्वे भद्राचन्द्रभगे ततः ।
ताम्बूलवीटिकां तत्र ददौ मन्दं विशाखिका ॥३४॥

मालाहस्ता चरत्यालिकौमुदी कृष्णमोदिता ।
सौगन्ध्यं वहति प्रायस्तस्माद् यस्मात्कुमुद्वती ॥३५॥
ललिता राधिका- पार्श्वे संस्थिता तद्विनोदयत् ।
रागिणी च हरेः पार्श्वे कौतूहलपरायणा ॥३६॥

काश्चिद्वीणां वादयन्त्यो मधुरं सुस्वरं सखि ! ।
मोदयन्त्यश्च तौ कामं स्वयं मुदमवाप्नुवन् ॥३७॥
काश्चिन्मृदंगघोषेण तोषयन्त्यः स्ववल्लभौ ।
परमानन्दमापन्ना अवापन्परमं सुखम् ॥३८॥

काश्चिन्नु गीतमाधुर्य्यैं मोदयन्त्यो मनोहरौ ।
स्वयं च तन्मुखं दृष्ट्वा परं विस्मयमागताः ॥३९॥
दर्शितेव मयात्र तु कृष्णाय सुकुतूहलम् ।
वर्णयामि च तत्सर्वं शृणु नन्दिनि तत्वतः ॥४०॥
तासां व्रजकिशोरीणां शृण्वतीनान्मयोदितम् ।
सभायां तु यथा दृष्टं सर्वाभिश्च सविस्मयम् ॥४१॥
अहो चित्रं यतः सर्वाः किशोर्य्यो व्रजमण्डले ।
दर्पिताः स्वीयसौन्दर्य्यैः दृश्यता तत्पराभवः ॥४२॥
राधारूपप्रतापेन कृताः सर्वास्तिरोहिताः ।
दृश्यंते प्रभया तस्या रवौ दीपावली यथा ॥४३॥
धीरा—सत्यं वदसि देवि त्वं राधिका सौभगास्पदा ।
तस्याश्छायां समाश्रित्य रूपवत्यो व्रजांगनाः ॥४४॥
न तु तस्याः समत्वं वै वांछन्त्यत्राबला व्रजे ।
तत्कैङ्कर्य्यं तु नितरां वांछंत्यः कृष्णसंवने ॥४५॥



त्रैलोक्यमोहनः कृष्णो गोविन्दो नन्दनन्दनः ।
यया संमोहितो देवि ! निजसौन्दर्य्यविभ्रमैः ॥४६॥
नारायणप्रिया देवी लक्ष्मी रूपवती मया ।
श्रुता वास्याः कलांशां वै स्प्रष्टुं शक्ता न विद्यते ॥४७॥
साम्प्रतं कृष्णभुजयो राजता किं वदामि वै ।
स्वर्णवल्ली यथा श्लिष्टामाकन्दे शंकते तरौ ॥४८॥
कृष्णः—धीरे साधु त्वया कामं यथाभूतं प्रजल्पितम् ।
गोपीसौन्दर्य्यवल्लीनां मञ्जरीयं तु राधिका ॥४९॥

तस्या रसे समासक्तो भृंगोऽहं व्रजमण्डले ।
तां विनात्मा क्षणं चापि मया धर्त्तुं न शक्यते ॥५०॥
सर्वा व्रजकिशोर्य्योऽपि मद्बद्धहृदया यतः ।
प्रतोषयामि ताः कामं राधास्नेहेन यन्त्रितः ॥५१॥

राधिकाकृपया हीना न मां प्राप्स्यति वै व्रजे ।
तस्मादस्याः पादपांशुं सेवध्वं व्रजयोषितः ॥५२॥
राधा—धीरे हसत्ययं कृष्णो यतो हास्यपरायणः ।
सर्वासां घोषनारीणां वल्लभोऽयं युवोत्तमः ॥५३॥
वयं सर्वास्तु किंकर्य्यो रसिकस्यास्य सर्वदा ।
सख्यः सदा प्रसेवध्वमस्य पादसरोरुहम् ॥५४॥
वृन्दा—राधे त्वां चैव गोविन्दं परमार्थप्रदायकौ ।
का न सेवेत वै प्रेम्णा नित्यकेलिसुखेप्सया ॥५५॥
कृष्णश्च राधिकान्योन्यविलासभरवीक्षणैः ।
संप्रापत् परमं मोदं किं वदामि च नन्दिनि ! ॥५६॥
तत्सभायाश्च कौशल्यमपि शोभां वदामि किम् ।
न दृष्टं न श्रुतं जातु त्रैलोक्येऽपि कदाचन ॥५७॥
एतन्सुखं न वैकुण्ठे न स्वर्गे न च भूतले ।
न सत्ये न च कैलाशे न कौबेरे न वारुणे ॥५८॥

वृन्दाटव्यां यत्सुखं च क्रीडितौ च निरन्तरम् ।
राधाकृष्णौ तु सततं गोपनारीगणावृतौ ॥५९॥
पूर्णमासी तदा भद्रे समायाता च तत्र हि ।
समालोक्य च तल्लीलां परानन्दमथागमत् ॥६०॥

एवं निरन्तरं कृष्णः प्रियया राधयान्वितः ।
संक्रीडति यथा कामं वृन्दावनवनोत्तमे ॥६१॥
मया ते कथितं सर्वं चरित्रं परमाद्भुतम् ।
राधिकाकृष्णयो भद्रे परमानन्ददायकम् ॥६२॥

यः शृणोत्यपि हृद्देशे रहः संधारयत्यथ ।
तस्यास्यैव विहारेषु रतिर्वर्द्धते तादृशी ॥६३॥

नन्दिनी-मया देवि ! महापूर्वा कृष्णलीलामनोरमाः ।
श्रुतास्तव प्रसादेन सार्थजन्मा भवं ततः ॥६४॥

कथं द्रक्ष्यामि सहसा लीलां माकन्दमण्डिताम् ।
तत्र राधां च कृष्णं च तत्कुरुष्व कृपां मयि ॥६५॥

वृन्दा—साधितार्थासि भद्रे त्वं यतः प्राप्तासि गोकुले ।
दृष्टः कृष्णश्च राधा च लीलाश्च विविधास्त्वया ॥६६॥
नातिदूरेण कालेन तयोरर्पित चेतसा ।
द्रक्ष्यसे तद्विहारं यमच्युतं मुनयो विदुः ॥६७॥

रागिणी चापि तद्भावात्संप्राप्ता तस्य केलिषु ।
त्वं च नन्दिनि शीघ्रं वै प्राप्स्यसे तत्सुखं खलु ॥६८॥
अहं त्वां दर्शयिष्ये वै लीलां तां नित्यनूतनाम् ।
त्वद्भावोऽपि मया सर्वो ज्ञातो नन्दिनि वै ध्रुवम् ॥६९॥
स्वरूपं हृदये कृत्वा नित्यमायातु वै वने ।
तत्र मां च समासाद्य वयस्यैः पृच्छ तत् स्थितिम् ॥७०॥
भूत्वा त्वं सखि सत्संगं विचरस्व वने वने ।
म सङ्गपरिचयात्त्वां ज्ञास्यते नन्दनन्दनः ॥७१॥



तस्मान्मम प्रसंगेन तत्र गन्तुं भविष्यसि ।
योग्या तस्मान्मदुक्तेषु वर्तायस्व निरन्तरम् ॥७२॥
राधापि ज्ञास्यति त्वां वै मम संगे निरन्तरम् ।
इदं भद्रं च सिद्धार्थं शृणु नन्दिनि तत्वतः ॥७३॥

नन्दिनी—अहं देवि ! सदारण्ये वत्स्यामि तव पादयोः ।
कृपया दर्शय प्राज्ञे नित्यकेलिं तयोः खलु ॥७४॥
नित्यं तु नूतनतरां परमानन्दवर्द्धिनीम् ।
राधिकाकृष्णयोर्लीलां मां विलोकय देवि वै ॥७५॥
नातिदीर्घेण कालेन नन्दिनी नित्यकेलिषु ।
संप्राप्त्वा निजभावेन ददृशे राधिकाप्रियम् ॥२७६॥

इति श्रीकृष्णकौतुके माकन्दमण्डपविहारो
नाम नवमो सर्गः ९

संपूर्णं समाप्तः संवतु १६४६ वर्षे श्रावण सुदी
पूर्णमास्यां परमानन्देन लिखितं समाप्तं ।
॥ शुभमस्तु ॥



Scanned by TapScanner

*** श्रीकृष्णचैतन्यचन्द्राय नमः ***

नवगोरवरं नवहेमतरं नवपुष्पमरं नवदामधरम् ।
नवहास्यकरं नवलास्यपरं प्रणमामि शचीसुतगौरवरम् ॥१॥
निजकीर्त्तनचारुतरं नटनर्त्तननागरराजवरम् ।
कुलकामिनिमानसचौरपरं प्रणमामि शचीसुतगौरवरम्॥२॥
करकंकणहेमसुरत्नधरं शिखरेन्द्रधृतिप्रतिपूर्णकरम् ।
गतिखण्डितमत्तकरीन्द्रपतिं पदकोज्वलारातुलपद्मततिम् ॥३॥
स्मितमञ्जुलचारुसुचंद्रमुखं शुसिताखिलदुर्जयतुर्य्यसुखम् ।
रसपूरबिलासककेलिपरं प्रणमामि शचीसुतगौरबरम् ॥४॥
निजविक्रमचर्च्चितप्रेममदं स्वरनर्म्मबिचक्षणदक्षहृदम् ।
हृदयालुसुहृद्गणतोषकरं प्रणमामि शचीसुतगौरबरम् ॥५॥
मदपूरितलोचनतामरसं रससारगदाधरनामरसम् ।
कम्रकंठकरोज्वलप्रेमधरं प्रणमामि शचीसुतगौरबरम् ॥६॥
परमार्थपरायणलोकगतिं नयने वहन्तं जलधारततिम् ।
पतिताधमदुर्गतशानकरं प्रणमामि शचीसुतगौरबरम् ॥७॥
हरिनाममनोरमग्रन्थिपरं निखिलात्मिकशक्ति प्रकाशधरम् ।
धरणीधरप्रेमबिलासपरं प्रणमामि शचीसुतगौरबरम् ॥८॥
इति चाटुमुचारुसुपुष्पधरं पदमिन्द्रियगौरकभूषकरम् ।
पठति च प्रतिदिनं यो नियतं स्मरेत्परिबारगने सुमतम् ॥९॥

इति श्रीमद्रूपगोस्वामिना बिरचितं
पुष्पदन्तस्तोत्रं सम्पूर्णम्

---

# श्रीकृष्णकौतुकम्

श्रीश्रीगौरचन्द्राय नमः

भाषार्थः—मनमोहन, वृन्दावनविहारी, श्रीकृष्ण की जय हो। जो श्रीराधिका के मुखरूपी कमल के लुब्धक भ्रमर के समान हैं उन नन्दनन्दन को मैं नमस्कार करता हूँ ॥१॥

तप्तस्वर्ण के समान गौरवर्ण, तथा प्रसन्नमुख "श्रीकृष्ण" नामक गुरु चरण को मैं नमस्कार करता हूँ ॥२॥

श्रीकृष्ण की अलौकिक लीलाओं से युक्त और परम आनन्दप्रद इस "कृष्णकौतुक" प्रवन्ध का मर्मज्ञ भक्त जन आनन्द लेवें ॥३॥

यह अद्भुत प्रवन्ध प्रभु की कृपा से प्रकट हुआ है अन्यथा इस अत्यन्त गहन विषय को मनुष्य नहीं जान सकता ॥४॥

यथा:—एक समय गोकुलवासिनी नन्दिनी देवी ने वन की देवी वृन्दा से स्नेह पूर्वक पूछा ॥५॥

नन्दिनी:—हे देवि ! आप सर्वदा कृष्ण की लीलाओं का आनन्द लेती हुई वृन्दावन में विचरती हो ॥६॥

तथा उन राधा और कृष्ण की कुञ्जों और वनों में जो भी रहस्यात्मक लीलाएँ हैं उन्हें आप अवश्य जानती हो अतः आप उन लीलाओं को सुनाने की कृपा करें ॥७॥

क्योंकि मेरा मन उन की नवीन लीलाओं के वशीभूत है इसी गुह्य ज्ञान को खोजती हुई मैं ब्रज के वनों में घूम रही हूँ ॥८॥

हे देवि ! कमललोचन कृष्ण नन्दजी के गृह में रहते हुए भी रोहिणी के द्वारा किस प्रकार पालित हुए ॥९॥

यद्यपि मैं उनकी लीलाएँ देखने के लिले निरन्तर गोष्ठ में ही रहती हूँ फिर भी उनका तत्त्व जानने में असमर्थ हूँ ॥१०॥

वृन्दाः-हे प्रेममयी नन्दिनी ! आप धन्य हो जो कि श्रीराधा और कृष्ण की लीलाओं के सम्बन्ध में अपने प्रश्न किये है ॥११॥

हे कल्याणि ! जिन के प्रेमानन्द में मेरा मन सर्वदा निम-ज्जित रहता है उनकी समस्त लीलाओं का वर्णन मैं आप के स-मक्ष करती हूँ ।।१२।।

हे देवि ! नन्द जी का गृह चतुष्कोण और अत्यन्त रमणीक है उसके ठीक सामने बहुत सुन्दर विशाल गौशाला है ।।१३।।

और अब हे शुभाशये ! आप श्रीकृष्ण के घर का यथार्थ वर्णन सुनो ।।१४।।

श्रीकृष्ण के घर के पूर्व की तरफ सुन्दर स्तम्भशाला है उसमें सात दरबाजे हैं और चार प्रकोष्ठ हैं ।।१५।।

उस स्तम्भशाला में चन्द्रकान्त आदिक मणियाँ, और रत्न जड़े हुए तथा उसकी भित्तियों में विभिन्न प्रकार के पन्ना, पुखराज भी अलंकृत है ।।१६।।

उसमें नन्द जो अत्यन्त आनन्द पूर्वक निवास करते हैं तथा अत्यन्त स्नेह के कारण पुत्र दर्शन को ही महान उत्सव मानते हैं ।।

और हे सखि नन्दिनी ! इसी स्तम्भशाला के ही समान उत्तर की तरफ एक स्तम्भशाला और है उसमें भी भिन्न भिन्न प्रकार के दिव्य रत्न जड़े हुए हैं ।।१८।।

इसमें दही मन्थन करने के लिये खूँटे गड़े हुए हैं तथा कुछ और खूँटे भी साफ और स्वच्छ इसके अन्दर रक्खे हुए हैं ।।१९।।

प्रातः काल यह स्तम्भशाला दही मन्थन के घोष से उद्घोष करती रहती है इसी मे श्री यशोदाजी भी नित्य प्रति विरा-जती है ।।२०।।

और इन सब स्तम्भशालाओं में दक्षिण की तरफ वाली जो मुख्य है वह अत्यन्त सुन्दर और रसवाली है उस में भक्ष्य ( खाने के ) भोज्य ( चबाने के ) तथा मधुर, लवण, आदि ६ प्रकार के रसों का परिपाक होता है ।।२१।।



और पश्चिम की तरफ एक बहुत बड़ी और सुन्दर स्तम्भ-शाला है-जिस में अन्न और रसों के पकाने के बर्तन रक्खे जाते हैं ।।२२।।

सुन्दर सुन्दर प्रकोष्ठों वाले दरवाजों से युक्त और भिन्न भिन्न प्रकार के बहुत से चित्रों से चित्रित चारों ओर और भी सुन्दर अट्टालिकाएं हैं ।।२३।।

अलिन्द भी ( वह स्थान जहाँ गायें बान्धी जावें "खिरक" ) बहुत रमणीक, बड़ा और आनन्द प्रदान करने वाला है। श्रीकृष्ण के प्रिय बछड़े घंटियों की आवाज करते हुए घूम रहे हैं ।।२४।।

हे नन्दिनी जो पूर्व की स्तम्भशाला है उसके ठीक सामने वाले घर के दरवाजे की किवाड़े बहुत बड़ी है और तोरणों से अलङ्कृत हैं ।।२५।।

हे शुभाशय वाली नन्दिनि ! जिस घर में नन्द जी रहते हैं उसके ऊपर स्वर्ण तथा रत्नों से अलंकृत एवं स्फटिक-मणिजटित रमणीक अट्टालक है ।।२६।।

हे नन्दिनी, उसी अट्टालक के ऊपर नन्दनन्दन श्रीकृष्णचन्द्र सोते हैं। वहीं एक सुन्दर वितान ( तम्बू ) भी सुशोभित है ।।२७।।

हे प्रिये ! स्वर्ण रचित सुन्दर सूत्रों से एवं बहुत सी सुन्दर युक्तियों से ( बनाने की कला से ) निर्मित एवं मोतियों की झा-लरों से युक्त है ।।२८।।

सुनहरे रङ्गों से रञ्जित तथा विभिन्न प्रकार के रङ्गों से चित्रित उसकी भित्ति है। उस पर बहुत से सुगन्ध-पात्र ( इत्रदानी ) आदि रक्खे हैं ।।२९।।

उस भित्ति के पास की जमीन पर बड़े बड़े बस्त्र भी हैं और एक बड़ा पर्यंक ( पलंग ) भी है जो कि स्वर्ण आदि रत्नों से ज-टित है ।।३०।।

हे महाभागे ! उस पर्यंक (पलंग) के ऊपर दूध के फेन के समान सफेद और कोमल तथा विस्तृत श्रीकृष्ण जी को सुख प्रदान करने वाली शय्या है ॥३१॥

सुविस्तृतगृह द्वार के चारों तरफ गौशालाए हैं। उन के आगे राज द्वार है उसके आगे बहुत बड़ी वनराजियों (कमलों) की पक्तियाँ हैं ॥३२॥

नन्दिनी:—हे देवि ! आपके अनुग्रह रूप वाक्यों से श्रीकृष्ण के भवन का अत्यन्त अद्भुत वर्णन बड़े हर्ष के साथ सुना अब आगे रहने दो ॥३३॥

अब आगे श्रीकृष्ण प्रातः काल से उठ कर अपनी स्वेच्छा से क्या क्या इच्छित कार्य करते हैं आप कृपा करके उनकी चेष्टाओं का वर्णन कीजिये ॥३४॥

वृन्दा:—किसी समय तीनों लोकों को मोहने वाले श्रीकृष्ण बालरूप से नन्द के घर में माता के द्वारा अत्यन्त लालित पालित होकर खेलने लगे ॥३५॥

उसी समय दीन, दुःखीजन के समान विनय प्रदर्शन करती हुई तथा गूँगे और अत्यन्त जड़ व्यक्ति के समान चेष्टा वाली श्रीकृष्ण के खोजने में तल्लीन कोई स्त्री आई ॥३६॥

वहाँ पर श्रीकृष्ण को मित्रों के साथ खेलता हुआ देख कर अत्यन्त आनंद का अनुभव करने लगी और वहीं पर स्थित हो गई ॥ ३७ ॥

यशोदा ने कृपा पूर्ण नेत्रों से उसे देखकर कुछ मधुरता से कहा ॥३८॥

तुम्हारा निवास कहाँ है तथा तुम कौन हो क्या नाम है तुम्हारा कुल कौन सा है क्या चाहती हो हे कल्याणी ! तुम मुझको समस्त तत्व बतलाओ ॥३९॥



वृन्दा—इस प्रकार रानी यशोदा जी के बचन सुनकर कृष्ण में संलग्नचित्त-वह बधू, आपने हृदय के विचारों को नम्रता पूर्वक कहने लगी ॥४०॥

रागिणी—हे देवि ! मैं अपनी इच्छा से आपके गोष्ठ में विचरण करती हूँ रागिणी मेरा नाम है तथा नित्य आनन्द घन श्रीकृष्ण में अनुराग रखती हूँ ॥४१॥

वृन्दा—रागिणीने दया से आकुल होकर यशोदा से इस प्रकार प्रार्थना की तब हृदय के स्थित मर्म को यशोदा ने उसी समय कह सुनाया ॥४३॥

यशोदा-हे रागिणी ! तुम मेरे घर में निवास करो तथा आनंद पूर्वक अपनी रुचि के अनुसार मेरे यहाँ विचरण करो ॥४४॥

साथ ही कृष्ण की रक्षा के लिये आप मेरे साथ रहें कारण कि आप साध्वी हैं तथा सुशीला हैं अतः सदा मेरी आज्ञा के अनुकूल रहें ॥४५॥

वृन्दा—इस प्रकार यशोदा की आज्ञा से कृष्ण का संग चाहने वाली रागिणी लगातार सेवा करने में कुशल हो गई ॥४६॥

श्रीकृष्ण भी अपनी अच्छी सेवा के द्वारा इस रागिणी से सन्तुष्ट हुऐ और प्रेमाकुल उस रागिणी से स्नेह बढ़ाने लगे ॥४७॥

नंदिनी-हे भगवति ! रागिणी के भाग्य की गुरुता अत्यन्त अद्भुत है जो कि नंद के घर में ऐश्वर्य के लिये आज्ञा देने वाले श्रीकृष्ण में रति बढ़ा रही हैं ॥४८॥

इस प्रसंग को सुन कर मेरा मन कुतूहल से युक्त हो गया है क्यों कि ब्रज में नित्य नवीन उसका उदय देखती हूँ ॥४९॥

फिर भी उस प्रसंग को तो किसी प्रकार जानती हूँ जो कि इस समय तुम्हारे मुख कमल से सुना है ॥५०॥

परन्तु हे देवि ! राधा और श्रीकृष्ण दोनों के हृदय में

प्रेम का अंकुर किस प्रकार उदय हुआ तथा और भी अन्य जो लोकोत्तर प्रसंग है उनको सुनने की मेरी इच्छा है ॥ ५१ ॥

किस दूती ने इस प्रेम की लता को जल के द्वारा सिंचन कर पालन किया तथा उसका यह अद्भुत मधुर फल किस प्रकार परिपक्व (पका) हुआ ॥५२॥

जिस प्रकार नन्द जी राजा थे उसी प्रकार श्रीवृषभानु जी भी राजा थे और संसार में अद्वितीय "राधा" नाम से प्रसिद्ध उनकी पुत्री हुई ॥५३॥

अतः हे देवि ! मुझे बड़ा आश्चर्य हो रहा है कि पिता के द्वारा पूर्ण-प्रयत्नों से पालित होने पर भी उस (राधा) का श्रीकृष्ण में प्रेम किस प्रकार हो गया ॥५४॥

हे देवि ! अत्यन्त आनन्द वर्द्धन करने वाले तथा रास-क्रीड़ाओं के मूलाधार उस श्रीराधा और कृष्ण के योग (प्रथम-मिलन) को मुझे सुनाइये ॥५५॥

वृन्दा—हे लोक को आनन्दित करने वाली नन्दिनी ! आप धन्य धन्य हैं, जो कि आप अमृतमयी प्रेम-लीलाओं का स्मरण मुझे करा रही है ॥५६॥

जो वृत्तान्त तथा जो कुतूहल जिस प्रकार हुआ है उस सब को संक्षेप से वर्णन करती हूँ आप सुनें ॥५७॥

ब्रजमण्डल में श्रीकृष्ण के सौन्दर्य की मधुरिमा की प्रसिद्धि हो गई यहाँ तक कि दूती के कार्य की आवश्यकता ही नहीं रही, स्वयं श्रीकृष्ण की कान्ति ही निर्विघ्नरूप से दूत्यकार्य में सफल रही ॥ ५८ ॥

हे सखि ! अनुपम वह श्रीराधा वृषभानु जी के घर में उत्पन्न हुई और उनका भी सौन्दर्य ब्रजवासियों में उसी प्रकार प्रसिद्ध हो गया ॥५९॥



हे सखि ! संसार में अद्वितीय दोनों शोभाओं का मिलन अन्य, लोकों में सम्भव नहीं है ब्रजमण्डल में कदाचित् सम्भव है ॥६०॥

फिर भी मेरे जैसे साधारणजनों के उद्योग से यह प्रियकार्य होना सम्भव नहीं है, फिर भी आत्मसन्तोष के लिये प्रयत्न करती हूँ ॥६१॥

हे भद्रे ! अत्यन्त अतुलित दोनों तेजों को मैंने जब निर्निमेष दृष्टि से देखा तो सुयोग होने का विचार करने लगी ॥६२॥

दूत्यभाव की विशेषज्ञा श्रीकृष्ण के कौशल को जानने वाली श्री-वीरा (सखी) को राधा के प्रेम बढ़ाने के लिये मैं ने भेजा ॥६३॥

हे शुभाशये ! इसी प्रकार मैंने भी वन में श्रीराधा के सौन्दर्य का वर्णन प्रसंग आने पर श्रीकृष्ण के प्रति वर्णन किया ॥

नन्दिनी—श्रीकृष्ण वन में गौ चराने के लिये अपने सभी समवयस्क मित्रों के साथ जाते हैं तो वहाँ पर क्या करते हैं ॥६४॥

वृन्दा—मैं ने पूर्व में ही जिस रागिणी का वर्णन किया है, उस को प्रेम से श्रीकृष्ण की सेवा करने के लिये ब्रजराज श्रीनन्द जी ने नियुक्त कर दिया है ॥६५॥

वह रागिणी नित्य प्रति प्रातः काल होते ही श्रीकृष्ण को बड़े उत्साह से जगाती थी ॥६७॥

रागिणी—"हे कमललोचन ! हे चन्द्रमुख श्रीकृष्ण जी यह प्रभात (प्रातः काल) हो गया है अतः अब निद्रा को त्याग दो और माता जी तुम को बुला रही है उनके पास चलो ॥६८॥

घी से आटा मर्दन कर मीठी रोटियाँ (मठरीयाँ) बनाई है और मक्खन से तथा शक्कर से परिप्लुत (पगादिया) करदी है ॥ ६९ ॥

और कपड़े से बन्धा दही माता ने तुम्हारे लिये सुरक्षित

रख दिया है अतः हे नयनानन्द उठो और प्रेम से यथेच्छ भोजन कीजिये ।।७०।।

और सुबल इत्यादि जो तुम्हारे मित्र हैं वे सभी वहीं खड़े हुऐ तुम्हारे दर्शन की प्रतीक्षा कर रहे हैं ।।७१।।

ब्रजराज के सामने खड़े खड़े वे सभी गोपबालक गण वन में जाने के लिये और खेल खेलने के लिये कोलाहल कर रहे हैं ।।७२।।

वृन्दा-इस प्रकार जब रागिणी ने मधुर शब्दों से अनेक बार प्रार्थना की तो श्रीकृष्ण धीरे से उठे और मन्द मन्द गमन करते हुए यशोदा के पास पहुँचे ।।७३।।

कमलनेत्र श्रीकृष्ण मुख से जृम्भण (जंभाई लेना) करते हुए अपने हाथों से नेत्रों को उन्निद्रित करने लगे ।।७४।।

तब यशोदा ने प्रेममयी-वाणी से लालन (प्यार) किया। तत्पश्चात् श्रीकृष्णचन्द्र ने मित्रों के साथ भोजन करना आरम्भ कर दिया ।।७५।।

इस के पश्चात् श्रीकृष्ण ने रक्तवस्त्र निर्मित तथा मोतियों से जटित शिरोभूषण ( पगड़ी ) को धारण किया ।।७६।।

काले काले स्निग्ध केश भिन्न भिन्न प्रकार के वेष्टनों (बन्धनों) से बन्धे हुऐ हैं। मस्तक पर वे झुके हुऐ ऐसे ज्ञात होते हैं जैसे कमल पर भौंरें बैठे हों ।।७७।।

सुन्दरमुख-वाले श्रीकृष्ण अपनी केशराशि के द्वारा तथा नेत्रों के तिरछे चितवन की कला से एवं अपने माधुर्य से कामदेव को परास्त करने लगे हैं ।।७८।।

उन्नतनासिका-वाले, किशोर-अवस्थावाले, सुन्दर-कान्ति-वाले, बिम्बाफल के समान रक्तओष्ठवाले, श्रीकृष्ण नवीन दन्त-पंक्तियों के द्वारा शोभा पाने लगे हैं ।।७९।।

कनेर-पुष्पों से कानों की शोभा हो रही है और गले से



श्रीवत्स तथा स्वर्ण और अलंकारों की सुषुमा बढ़ रही है ।।८०।।

शंख के समान कण्ठ में स्वर्ण की माला को धारण कर रक्खा है, और कौस्तुभ-मणि तथा मोतियों की मालाऐं वक्षस्थल की शोभा बढ़ा रही है ।।८१।।

विशाल भुजाओं में रत्न-जटित अंगद नाम के आभूषण शोभा दे रहे हैं और सुन्दर रत्नों से देदीप्यमान अँगूठीयाँ अंगुलियों में शोभा दे रही हैं ।।८२।।

रक्त-कमल के समान लाल रंग के दिव्य कटि बस्त्र( धोती ) को धारण कर रक्खा है, तथा कटि भाग में करधुनी ( कौंधनी ) और पैरो में नूपुरों को धारण कर रक्खा है ।।८३।।

और प्रातः कालीन सूर्य के समान पीले उत्तरीय ( दुपट्टा ) को धारण कर रक्खा है एवं विश्व को मोहन करने वाली मुरली को दोनों हाथों में धारण कर रक्खा है ।।८४।।

इस प्रकार श्रीकृष्ण प्रत्येक अंग को विभूषित कर वन में गाय चराने के लिये हर्षित होकर नन्द के घर से निकले ।।८५।।

यशोदा और नन्द श्रीकृष्ण को एक क्षण भी त्यागन में असमर्थ थे अतः बड़े कष्ट के साथ उनका मुख देखते हुए वापिस लौटे ।।८६।।

श्रीकृष्ण चारों ओर से समवयस्क साथियों से घिरे हुए एवं स्मितमुख की कान्ति और शरीर के तेज से वहुत सुन्दर प्रतीत हो रहे हैं ।।८७।।

उस सुन्दर स्वरूप के दर्शन की इच्छा से गोपियों ने जब श्रीकृष्ण के वन में जाने की कोलाहल सुना तो घर पर इकट्ठी हो गई ।।८८।।

कुछ गोपियाँ उनका मुख देखने के लिये अट्टालिकाओं पर चढ़ गई, और निर्निमेष ( टकटकी ) देखने लगीं ।।८९।।

Scanned by TapScanner

जहाँ पर मित्रमण्डली से घिरे हुए श्रीकृष्ण खड़े थे वहाँ जो गोपियाँ आई थी वे सब उनके मुखमण्डल को प्रेम-पूर्वक देखती हुई चित्र लिखित के समान हो गई ॥६०॥

किशोर अवस्था से विभक्त अंग वाले तथा गोपियों के मन को अपहरण करने वाले श्रीकृष्ण समस्त गौओं को आगेकर सब को सन्तुष्ट कर वन को प्रयाण करने लगे ॥६१॥

शृंग तथा वंशी वांसों की आवाज से समस्त दिशाओं को गुञ्जायमान करते हुए आपस मे हँसते हुए वन में आये ॥६२॥

श्रीकृष्ण ने अत्यन्त रमणीक वृन्दावन में गाय और गोपियों के साथ प्रवेश किया ॥६३॥

इस रमणीक वृन्दावन में पक्षियों के द्वारा आन्दोलित (हिलाये गये) वृक्षगण फल, पुष्प पत्र और सभी अर्थ सिद्धियों को प्रदान करते हैं ॥६४॥

हिलते हुए पत्तों वाले और अत्यन्त सुन्दर और चिकने अश्वत्थ के वृक्ष हैं, तथा उनके ऊपर तोता मैनाओं के झुण्ड कलरव कर रहे हैं । ६५॥

पत्तों से सघन तथा शाखा-प्रशाखाओं से आच्छादित एवं रक्तमोतियों के सदृश फल वाले वड़ के वृक्ष हैं ॥६६॥

तथा और भी जैसे, ताल के, तमाल के, शाल के, आम के, जामुन के, कदम्ब के, पीपल के, विल्व के, बकुल के, खजूर के, वृक्ष इधर उधर विद्यमान हैं ॥६७॥

तथा चिंचिणी के, नारियल के, मधूक के, प्लक्ष के, पीलू के, सुपारी के, पलाश के, बाँस के, और भी बहुत से विभिन्न प्रकार के वृक्ष हैं ॥६८॥

जैसे-कहीं कहीं पर अच्छे चन्दन के वृक्ष हैं कहीं पर चम्पक के, अशोक के, पुन्नाग के तथा रक्तवर्ण के नाग केसर हैं ॥६९॥



अनार के, नीम के, नीबू के, बीजपूर के तथा और दूसरे प्रकार के हमेशा फल जिन में लगा करते है ऐसे वृक्ष तथा मीठे फल वाले वृक्ष हैं ॥१००॥

और वहाँ पर दाखों की लताएँ ( वेलें ) तथा मालती की, जाती की, यूथिका की, मल्ली की, वासन्तिका की, कुन्दी की, स्वर्ण-यूथी की, केतकी की भी सुन्दर सुन्दर लताएँ विद्यमान हैं ॥ १०१ ॥

हमेशा बसन्त की तरह पुष्पित रहने वाले रङ्गण, कर्णिकार, विचिकिल्ल, जपा आदि वृक्ष हैं ॥१०२॥

वहाँ पर बहुत सुन्दर निकुञ्ज हैं और जिनका शिखर भाग पुष्पों से मण्डित है तथा रस में आसक्त रहने वाले उन्मत्त भ्रमर समूह गुञ्जन कर रहे हैं ॥१०३॥

कोयलें कूजन करती हुई मयूरीयाँ (मोरनी) नृत्य करती हुई, हिरणीयाँ और हिरण विचरण करते हुए कृष्ण के मोद से मुदित हो रहे हैं ॥१०४॥

जिस में पुष्पोदक अत्यन्त निर्मल वह रहा है और खिले हुए कमलों की सुरभि (सुगन्धि) से जिस के तट सुगन्धित है ऐसी श्रीयमुना जी विद्यमान है ॥१०५॥

तथा हे शुभाशये ! कल्हार, कुमुद, चन्दन आदि से निकली हुई चञ्चल वायु नित्य प्रति सुख पूर्वक स्पर्श कर रही है ॥१०६॥

और हे भद्रे ! श्रीकृष्ण के सौन्दर्य में मोहित हुए चक्रवाक चक्रवाकी और कारण्डव, हंस तथा अन्य जलचर पक्षी जहाँ सुख पूर्वक रहते हैं ॥१०७॥

इस प्रकार से वर्णित वन में धेनु चराने में संलग्न श्रीकृष्ण बड़े आश्चर्य से प्रवेश करते हुए सुबल से बोले ॥१०८॥

श्रीकृष्ण—हे मित्र ! इस परम सुशोभित वन को देखो जो

